दर्शनिशास्त्रे

1. आचार्य बदरीनाथ शुक्ल-प्रशस्तिः
2. मन एव इच्छादीनामाश्रयतया जीवो न तदन्यः (आचार्य बदरीनाथ शुक्लः)
3. योगः कर्मसु कौशलम्
4. श्री सुरेश्वराचार्य विरचितो वेदान्तग्रन्थः स्वाराज्यसिद्धिः

# प्राच्य विद्या

( मासिकपत्रिका )




प्रथमवर्षे
एकादशोऽङ्कः [ ११ ]

वाराणसी

प्रकाशनतिथिः
कार्त्तिकीपूर्णिमा, २०४४ वै०

---

# विषयानुक्रमः


| | | पृष्ठम् |
|---|---|---|
| १. मङ्गलम् | | १ |
| २. सम्पादकसंवादः | | |
| महनीयाः श्रीशुक्लमहोदयाः | स्वामी द्वारिकादासशास्त्री | २-३ |
| ३. श्रद्धाञ्जलिः | पं० श्रीशिवजी उपाध्यायः | ४-५ |
| ४. शास्त्रपरिचर्चा— | | |
| १. मन एवेच्छादीनामाश्रयतया जीवो न तदन्यः | आचार्यबदरीनाथशुक्लमहाभागाः | ६-११ |
| २. पाणिनिसम्प्रदाये भाष्य-विरोधावहेलनम् | डा० हिन्दकेसरी | १२-१७ |
| ५. विद्वत्परिचयः— | | |
| आचार्यबदरीनाथशुक्लमहाभागाः | पं० श्रीसर्वेश्वरराजहंसः | १९-२० |
| ६. एकाङ्कनाटकम्— | | |
| योगः कर्मसु कौशलम् | डा० भक्तिसुधा मुखोपाध्याया | २१-२३ |
| ७. बालानां सुखबोधाय— | | |
| आत्मनोऽजरामरत्वम् | श्रीरमेशचन्द्रपाण्डेयः | २४ |
| ८. स्वाराज्यसिद्धिः ( वेदान्तग्रन्थः ) ( श्रीसुरेश्वराचार्यविरचितः ) ( कैवल्यकल्पद्रुमव्याख्यासहितः ) | सम्पादकः स्वामी द्वारिकादासशास्त्री | ३३-५६ |

# प्रा च्य वि द्या

**वाराणसेयप्राच्यविद्याप्रसारसमितेः**

**मासिकी पत्त्रिका**


| कार्त्तिकमासः, २०४४ वि० | एकादशोऽङ्कः | नवम्बर, १९८७ ई० |
|---|---|---|


## मङ्गलम्

गुरुर्ब्रह्मा गुरुर्विष्णुः, गुरुर्देवो महेश्वरः।
गुरुः साक्षात् परब्रह्म, तस्मै श्रीगुरवे नमः॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
सर्वविघ्नहरस्तस्मै, तस्मै श्रीगुरवे नमः॥

अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन, तस्मै श्रीगुरवे नमः॥

यथा तथापि यः पूज्यो यत्र तत्रापि योऽर्चितः।
योऽपि वा सोऽपि वा योऽसौ, गुरुस्तस्मै नमो नमः॥

सम्पादकसंवादः—

# महनीयाः श्रीशुक्लमहोदयाः

भारतीयदर्शनेषु, विशेषतो न्यायवैशेषिकदर्शने, अधिगतयाथातथ्याः, विश्वविश्रुतयशस्काः, शास्त्रार्थमहारथाः, काश्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये प्राक्तनकुलपतयः, आचार्यप्रवराः श्रीमन्तो बदरीनाथशुक्लमहोदयाः त्र्यधिकसप्ततिवर्षवयसि अस्यैव मासस्य द्वाविंशतारिकायां शिवसायुज्यमवाप्नुवन्। इत्येतद् हृदयविदारकं वृत्तं श्रुत्वा तद्विरहेण शोकोद्विग्नः संस्कृतसमाजः, शोकार्तः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, समग्रा च काशी शोकसन्तप्ता जाता। प्राच्यविद्या तु तद्विरहेणानाथेव असहायेव चात्मानमनुभवति।

तेषां निधनेनापूरणीयेयं क्षतिः सञ्जाता संस्कृतजगतः; यतो हीमे प्रतिभया वैदुष्येण च महामहोपाध्यायपण्डितराजश्रीशिवकुमारशास्त्रि-बालशास्त्रिप्रभृतिविदुषामेव शृङ्खलायां विद्वत्समाजे प्रसिद्धा आसन्। यैरेषां शास्त्रार्थसभा कदाचित् एकवारमपि स्वोपस्थित्या सनाथीकृता, ते जानन्त्यनेन महाप्राज्ञेन शास्त्रार्थसरणौ स्वीकृतस्य प्रत्युत्पन्नमतित्वस्यामोघं लौहमुद्गरप्रभावम्। प्रतिभासम्पन्ना इमे महानुभावाः कतिधाऽखिलभारतीयशास्त्रार्थपर्षत्सु शास्त्रेषु दिग्गजानिवात्मानं मन्यमानान् बुधवरान् स्वलोकोत्तरवैदुष्यमहिम्ना दूरमपसारितवन्तः पराजयार्धचन्द्रिकयेत्यहो एषां वैदुष्यमाहात्म्यम्! इमे तत्र अजेयातिरथा इव सिंहनादं विनदन्ति स्म। अत एव बिगतचत्वारिंशद्वर्षेषु काश्यां सम्पन्नासु प्रायः सर्वास्वेव शास्त्रार्थसभासु तेऽध्यक्षपदं निर्णायकप्रमुखपदं वाऽलमकार्षुः।

इत्थं विद्वत्समाजतोऽनुपमं प्रेम, लोकातिशायिनीं श्रद्धाम्, लोकोत्तमं च सम्मानमधिगत्यापि इमे महानुभावाः स्वभावेन सरलाः, प्रकृत्या धार्मिकाः, हृदयेन च कनिष्ठेषु दीनेषु वा कारुणिका एवासन्। अत एवेमे छात्रान् यथा वात्सल्येनाजीवनमध्यापितवन्तः, तथैव व्यवहारे कमपि कीदृशमप्यर्थिनं दृष्ट्वा, श्रुत्वा च तदीयमौचित्ययुतं मनोरथम् अपूरयन्नेव। इत्येषां दयालुता प्रत्यक्षेव राजतेऽद्यापि तेषामर्थिनां समक्षम्।

अथापि ते यथा अध्यापने व्यवहारे वा नम्राः, तथैव शासने कठोरा इव दृश्यन्ते स्म। मन्ये केनापि अभियुक्तेन—

'वज्रादपि कठोराणि मृदूनि कुसुमादपि।<br>
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति'॥

इति तानेवाधिकृत्य कथितम्। शासने स्थितैस्तैः अनुचितवार्तारम्भको न राज्यपालो गणितः, नापि कश्चिद् वराकः कर्मकरः। अनुचितं त्वनुचितमेव, अथ च तत्कर्ता दण्ड्य एवेति तेषां मतिः। अत एव तेषां वर्षत्रयमितं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिपदशासनकालं सुवर्णयुगमिव मन्यन्ते पक्षपातरहितहृदयाः संस्कृतरक्षैकमानसाः सहृदया जनाः।

अस्मिन्नेव काले 'उत्तरप्रदेश संस्कृत अकादमी' परिषदोऽध्यक्षपदमलङ्कुर्वद्भिरेभिरा वर्षत्रयं ग्रामे ग्रामे नगरे नगरे च संस्कृतस्य ध्वज उत्तोलितः, योग्या अध्यापकाः संस्कृत-

रक्षायै व्यापारिताः, छात्राः प्रोत्साहिताः, दुर्लभपाण्डुलिपीनां संग्रहः कारितः, संस्कृतानुरागिणी जनता समये समये उचितपरामर्शेन भृशमुपकृता ।

एवमेव फ्रांसदेशस्य राजधान्यां पेरिसनगर्यां सम्पन्ने विश्वसंस्कृतसम्मेलने भारतस्य प्रातिनिध्यं कुर्वद्भिस्तैः 'संस्कृतं न केवलं राष्ट्रभाषाऽपि तु विश्वभाषा भवितुं समर्था' इति यः सिंहनादो नदितः, सोऽद्यापि अविस्मरणीयतां गतः संस्कृतानुरागिणामुत्साहं वर्धयतीव ।

संक्षेपतः, एभिः स्वाधीतिबोधाचरणप्रचारणैः आजीवनं संस्कृतसेवा कृता, शास्त्रसंरक्षणं विहितम्, नवानां ग्रन्थानां नवीनमतस्थापनपूर्विकया रचनया संस्कृतवाङ्मयं संवर्धितमिति इमे महाभागाः अस्माकं शतशः श्रद्धाभाजः, सहस्रशश्च प्रणम्या इति ।

ततश्चास्मिन्नवसरेऽस्माभिः प्रादेशिकशासनम्, केन्द्रीयशासनं च भृशं सम्प्रार्थ्यते यत् एषां महाभागानां स्मृतेरक्षुण्णतायै संस्कृतशिक्षाक्षेत्रे किञ्चिदीदृशं कार्यायोजनं योजनीयं येन तेषां संस्कृतस्योज्जीवनार्थं संवर्धनार्थं रक्षणार्थं च कृतः श्रमो व्यर्थं न यायात्, अनागते च काले संस्कृतानुरागिणी जनता छात्रा वा संस्कृतरक्षायै प्रेरणां प्राप्नुयुरिति ।

एवमेव च, तेषां शिष्याः प्रार्थ्यन्ते यत् महाभागैरेभिराजीवनं यदाचरितम्, यदध्यापितम्, लिखितं वा, तत् सर्वं तेषां विश्वविस्तृतशिष्यमण्डलपरिचयप्रदर्शनपूर्वकमेकस्मिन् स्मृतिग्रन्थे ग्रथनीयम् । अस्मिन् कर्मणि सहयोगार्थं 'प्राच्यविद्या' सदैव सन्नद्धेति आश्वासनपूर्वकं पुनरेकवारं पण्डितप्रवरान् प्रणमामः ।

सृजति तावदशेषगुणाकरम्,
पुरुषरत्नमलङ्करणं भुवः !

तदपि तत्क्षणभङ्गिकरोति चेद्,
अहह कष्टमपण्डितता विधेः !!

## आचार्य पं० बदरीनाथशुक्लमहाभागानां स्मृतौ

# श्रद्धाञ्जलिः

पण्डितश्रीशिवजी उपाध्यायः

[ सं० सं० वि० वि०, वाराणसी ]

( १ )

देशव्यापियशोविशेषविलसद्वैदुष्यभूषोज्ज्वलो,
न्यायोन्नायकदर्शनोदितनवप्रज्ञाप्रशस्तः सुधीः ।
काश्यामुद्गतवैभवः स बदरीनाथः सनाथः स्वतः,
शम्भोर्धाम जगाम नाममहिमोद्भासिप्रभाभास्वरः ॥

( २ )

विद्वद्रत्न ! तव प्रयत्नमहिता वाग्देवता दूयते,
स्वर्याते त्वयि काशिका कृशतनुर्दीना विहीना श्रिया ।
मुह्यत्पण्डितमण्डली च विकलीभूताऽभिभूता शुचा,
सोऽयं विश्वपतिः शिवोऽपि परमानन्दं जहाति स्वयम् ॥

( ३ )

बस्तीयं वसतिस्तवास्ति विहता त्वद्वञ्चिता जन्मभूः,
काशी चाध्ययनोन्नता विरहिता प्राध्यापनालङ्कृता ।
राष्ट्रश्रीसुरशेमुषीसुविदुषस्ते वैदुषीभूषिता,
भूम्ना भारतमेदिनीयमनिशं निर्वेदिनी खिद्यते ॥

( ४ )

वादे वादिनि वेद्यवस्तुविषये शास्त्रार्थसाक्षी भवन्,
लक्ष्यीकृत्य विपक्षपक्षवचनं सिद्धान्तनिर्देशकः ।
त्वादृक् को नु भवेत् पुनः शिवपुरि प्रामाण्यदृक् पण्डितः,
प्रोद्यत्प्रातिभबुद्धिशुद्धहृदयो निर्बन्धबोधाग्रणीः ॥

( ५ )

मान्ये शुक्लकुले द्विजोत्तम ! जनिं लब्ध्वा शुचिः शुक्लधीः,
शुक्लास्यस्मितिशुक्लभालतिलकः, शुक्लाम्बरः, शुक्लवाक् ।
शुक्लस्नेहमयाभिभाषणपटुः शुक्लीकृतः सर्वतः,
श्रीशुक्ल ! त्वमितः कुतो नु गतवान् ! त्यक्त्वात्मशुक्लान् गुणान् ॥

( ६ )

सप्तर्षिष्वथ कश्चनर्षिरुदितः शक्रो गुरुर्वा बुधो,
भूमिं भूषयितुं बभूव बदरीनाथाभिधः पण्डितः।
सम्भूष्य प्रभया धरां पुनरसौ ताराधिपज्योतिषा,
सङ्गत्य प्रगतो दिवं दिविषदां मोदाय खेदाय नः॥

( ७ )

विश्वान्तप्रविधानदक्षधिषणो विश्वाधिनाथः शिवः,
स्वात्मीकर्तुममर्त्यधर्मविधिना त्वामादरादाह्वयत्।
सायुज्यं तदवाप्तुमाप्तभगवन्निर्देश एष प्रधी-
र्हित्वैतत् क्षणिकं वपुर्भुवि दधौ दिव्यां तनुं शाम्भवीम्॥

( ८ )

श्रेष्ठं शास्तृपदं च शास्त्रविशदज्ञानं समानं सुखम्,
शुभ्रां कीर्तिमपत्यपूर्तिसहितां सम्पत्तिमुच्चैः कुलम्।
लोकेऽस्मिन् यदवाप्यमस्ति निखिलं तल्लब्धवान् स्वात्मना,
स्वर्गेऽपि प्रथतां विदाम्वर! भवान् प्राथम्यकोटिङ्गतः॥ ८॥

( ९ )

विन्ध्यादान्वीक्षिकीविद्याद्योतितज्ञानदीपितः।
पण्डितो बदरीनाथः स्मृतिशेषं यशश्चिरम्॥

## मन एवेच्छादीनामाश्रयतया जीवो न तदन्यः[1]

( नव्यनैयायिकमतपरीक्षा )

सर्वतन्त्रस्वतन्त्रा आचार्यपण्डितबदरीनाथशुक्लमहाभागाः

मम न्यायगुरोः मूर्तन्यायविद्यस्य श्रीशङ्करतर्करत्नदेवशर्मणो गुरुणा मम वेदान्तादिविद्यागुरुणा मूर्तमनीषेण श्रीबालकृष्णमिश्रेण प्रशस्यमानाप्रतिमपाण्डित्येन गोतमकल्पेन विदुषा श्रीमता राखालदासन्यायरत्नमहाशयेन प्रयागस्थितेन राजकीयमुद्रणालयेन १९३०तमे खिष्टाब्दे सम्मुद्रय प्रकाशिते निजे **तत्त्वसार**-ग्रन्थे जीवात्मविषये नव्यनैयायिकमतं समर्थयता प्रण्यगादि—

'मनसामेव चैतन्यं तत्रैवेच्छादिका गुणाः ।
अहम्प्रतीतिस्तत्रैव न तु जीवान्तरस्थितिः' ॥ १० ॥

अयमाशयः—ज्ञानेच्छाद्वेषादृष्टकृतिभावना मनसामेव गुणाः । एतद्गुणगणधर्मितया मनसामेव साधनीयत्वात् । न पुनस्तद्धर्मितया जीवान्तरसिद्धिरपि; गौरवान्मानाभावाच्च । अत एव

'भव हृदय साभिलाषं सम्प्रति सन्देहनिर्णयो जातः ।
आशङ्कसे यदग्निम्, तदिदं स्पर्शक्षमं रत्नम् ॥'
( अभि० शा०, प्र० अ०, २६ श्लो० )

इति भगवत्कालिदासकाव्यमपि साधु सङ्गच्छते । अन्यथाऽभिलाषवत्त्वस्य आशङ्कारूपज्ञानवत्त्वस्य च मनसि बाधेन तदीयकाव्यवाक्यस्य बाधितार्थकत्व प्रसज्येत । अत एव भारतपुराणमहाकाव्यादिष्वपि मनसामेव ज्ञानहर्षादिमत्त्वं बोधयन्ति बहुतरवाक्यानीति दृश्यते । तेष्वेव तादृशगुणवत्त्वं श्रुतिरपि प्रमाणयति । श्रुतिर्यथा—

'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिर्ह्रीर्धीरधृतिर्भीरेतत् सर्वं मन एव' इति ।

न च 'मनसा वेत्ति' इत्यादिव्यवहारस्यापि सर्वसिद्धतया तद्बलात् मनसि ज्ञानकरणत्वस्यैव प्रतिपत्तेः, कर्तृत्वकरणत्वयोस्तु परस्परविरोधेन तदाश्रयकर्त्रन्तरस्वीकारावश्यकत्वम्, स एव त्वतिरिक्तो जीवः, प्रकारान्तरेण तदनिर्वाहादिति वाच्यम्;

'आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना'

इत्यादि कालिदासाद्युक्तिदर्शनेन तयोर्विरोधे मानाभावात् ।

न च—

'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥'
( भ० गी०, २ अ०, २२ श्लो० )

इत्यादि श्रीभगवद्वचनस्थक्त्वाप्रत्ययश्रवणेन गृहीतशरीरस्य परित्यागानन्तरमेव शरीरान्तरपरिग्रहः प्रतिपाद्यते, स च जीवानां विश्वव्यापित्वं विना न हि सम्भवति, स्वकर्मवशेनातिदूरवर्त्तिस्वर्गनरकस्थानदेशान्तरेषु त्वरितगतिशीलानामपि मनसां शरीरा-

---

१. आचार्यपादैरयं स्वकीयः शोधनिबन्धः स्वव्याधिनिवृत्तये सरसुन्दरलालचिकित्सालये (का० हि० वि० वि० ) प्रवेशतः दिनत्रयात्पूर्वमेवास्मत्कार्यालये प्रकाशनार्थं प्रेषितः । मन्येऽयमन्तिमः प्रबन्धः श्रीमतामाचार्यपादानामिति——स० ।

न्तरपरिग्रहे कालविलम्बापत्तेरिति वाच्यम्; एकशरीरपरित्यागानन्तरमेव शरीरान्तर-परिग्रह इति नियमे मानाभावात्। अन्यथा 'ऋतञ्च सत्यञ्च' इत्यादिश्रुत्या, मन्वादिना च प्रलयस्य प्रलयोत्तरं शरीरपरिग्रहस्य च प्रतिपादनं विरुध्येत। प्रलये जन्यद्रव्यमात्रस्याऽसत्त्वेन तदुत्तरकाले शरीरपरिग्रहे पूर्वशरीरानन्तर्य्यव्याघातस्य सर्वैरेव स्वीकृतत्वात्। परन्तु—

'न स्नानमाचरेद् भुक्त्वा।'

'प्रातः सन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेद्'।

इत्यादौ क्त्वाप्रत्ययोऽप्युत्तरकालार्थको न त्ववहितोत्तरार्थक इति। 'वासांसि जीर्णानि' इत्यादिवचनेनापि मनसामेव जीवत्वं प्रतिपादितम्; न तु विश्वव्यापिनाम्। तथा सति शरीराणां तादृशजीवाच्छादकत्वविरहेण वसने तद्दृष्टान्तताऽनुपपत्तेः।

न्यायरत्नमहाशयेन मनस इच्छादीनामाश्रयत्वे 'भव हृदय साभिलाषम्' इत्युक्तेः बाधितार्थकत्वप्रसक्तेः मनस इच्छाद्याश्रयत्वसमर्थने आनुकूल्यं दर्शितम्। किन्तु नेदमुचितं वक्तुं शक्यते; यतः कालिदासो न गौतमात् प्रवरः, येन मनोभिन्नस्यात्मनः इच्छाद्याश्रयत्वं न्यायसूत्रे प्रत्यपादि, येन तद्विपरीतं कालिदासकथनं शिरोधार्यं कर्त्तुं शक्येत। किञ्चिदमपि विचारणीयं यन्निर्दिष्टायां कालिदासोक्तौ हृदयशब्दव्यपदिष्टं मनः साभिलाषीभवनाय कः प्रेरयति, को बा तत्सन्देहनिर्णयोत्पत्तिं ज्ञापयति, को वा अग्नित्वेनाशङ्क्यमानस्य शकुन्तलावपुषः स्पर्शक्षमरत्नत्वमवबोधयति? यदि मन एव इच्छा-सन्देह-निर्णयाना-माश्रयः, तर्हि सन्देहोत्तरं जातो निर्णयः स्वयमेव तेन ज्ञातुं शक्यते, अग्नित्वेनाशङ्क्य-मानस्य शकुन्तलावपुषः स्पर्शक्षमरत्नत्वं स्वयमेव तेन बोद्धुं पार्यते। तादृश्यां स्थितौ शकुन्तलाविषये तदीयस्य साभिलाषत्वस्य स्वाभाविकतया तदर्थं तस्य केनचित् प्रेर्यमा-णत्वं किं प्रयोजनकम्? अत इदमेवात्र मान्यं यत् शकुन्तलानुरागे आत्मनः प्रवृत्तौ प्रति-कूलं चेष्टमानं मनः प्रति आत्मकर्त्तृकमेव सर्वमिदं वचनम्। साभिलाषत्वञ्च नाऽत्र अभिलाष-समवायित्वम्, अपितु आत्मन्यभिलाषजन्मनि आनुगुण्यम्, एवमाशङ्कसे—शब्दोऽपि मनसः आशङ्काश्रयत्वं न बोधयति, अपि तु आत्मनि आशङ्काजनने आनुगुण्यं बोधयति।

किञ्च, इदमप्यत्र चिन्तनीयं यन्निर्दिष्टा कालिदासोक्तिः मनसः इच्छाद्याश्रयत्वसाधने सहायिका न भवितुमर्हति; यतः—

'अपारे काव्यसंसारे कविरेव प्रजापतिः।'

इति वचनानुसारेण कविः काव्यं रचयन् लोकशास्त्रविरुद्धमपि वक्तुमधिकृतः। अतस्तदुक्त्या लोकशास्त्रविरुद्धोऽर्थः न समर्थयितुं शक्यः। तरुणीपादस्पर्शेन अशोकद्रुमस्य उत्फुल्लीभवनं कविजगति प्रसिद्धम्, परं नेदं लोकदृष्टं शास्त्रप्रमाणकं वा। अत एव किं कविवर्णनबलेन इदं सत्यतया जगति स्वीकर्तुं शक्यं भवति। अत उक्तस्य कालिदास-वचनस्य मनस इच्छादीनामाश्रयत्वसमर्थने विनियोगः क्रियमाणः कथमपि नौचित्यमञ्चति!

'कामः सङ्कल्पो विचिकित्सा' इत्याद्युल्लेखेन एतत् सर्वं मन एवेति वदन्ती श्रुतिः न्यायरत्नमहाशयेन मनस इच्छादिमत्त्वे प्रमाणत्वेन उपन्यस्ता। एष उपन्यासोऽपि विद्वत्प्रीणनपरो न प्रतीयते; यतो न्यायमते असत्कार्यवादस्य मान्यतया उपादानोपादेययोः

तादात्म्यं नाभिमतम् । अत उक्तश्रुतौ कामादिपदैः सह मनःपदस्य समानाधिकरणबलेन मनःकामादीनामुपादानोपादेयभावमाश्रित्य कामादीनां मनोनिष्ठत्वं न प्रमाणयितुं शक्यते । अत एव उक्तश्रुतौ मनःपदं 'मनो हेतुकमेव' इत्यर्थकं मन्तव्यम्, तच्च मनसः कामादीनां निमित्तत्वेऽपि सङ्गच्छते ।

"मनसः ज्ञानादिमत्त्वे 'मनसा वेत्ति' इत्येवं सर्वमान्यं मनसः ज्ञानकरणत्वं नोपपादयितुं शक्यते; कर्तृत्व-करणत्वयोः भिन्ननिष्ठत्वनियमात्" इत्यापत्तेः परिहाराय न्यायरत्नमहाशयेन 'आत्मानमात्मना वेत्सि' इति कालिदासवचनमुपन्यस्य कर्तृकरणत्वयोः अविरोधप्रदर्शनाय यः प्रयासोऽकारि; सोऽपि युक्तिमत्तया न स्वीकर्तुं शक्यते; यत उक्तवचनं विष्णुं प्रति देवकृतस्तुतिपरम्, ईश्वरस्य विष्णोः ज्ञानं नित्यम्, अतस्तस्य आत्मकरणत्वकथने उक्तवचनस्य तात्पर्यं न स्वीकर्तुमर्हम् । किन्तु 'आत्मना' इति शब्दस्य जन्यज्ञाने प्रसिद्धस्य अन्यसापेक्षत्वस्य निरासाय आत्मन्यनिरपेक्षत्वबोधने तात्पर्यम् ।

एवमेव 'सृजस्यात्मानमात्मना' इत्यत्रापि शरीरे प्रवेशलक्षणाया ईश्वरसृष्टेः जीवस्य तादृश्याः सृष्टेः अपेक्षया वैलक्षण्यबोधने एव आत्मना इति शब्दस्योपन्यासः । तस्य नेदं तात्पर्यं यत् ईश्वरस्य उक्तलक्षणा आत्मसृष्टिः आत्मकरणिका; किन्तु जीवस्य उक्तसृष्टिरिव न प्रवेशकर्तृत्वसमानाधिकरणादृष्टसापेक्षा, तादृश्या ईश्वरसृष्टेः उपचिकीर्षितदेवमनुष्यादिसमवेतादृष्टेरेव साध्यत्वात् । अत उक्तवचनस्य यथाश्रुतार्थबलेन कर्तृत्वकरणत्वयोः अविरोधसमर्थनं नोचितं भवितुमर्हति ।

न्यायरत्नमहाशयेन 'वासांसि जीर्णानि' इत्यादिवचनबलेन मनसामेव जीवत्वं प्रतिपादितम्, न तु विश्वव्यापिनाम् । एतत्समर्थनाय शरीराणां विश्वव्यापिजीवाच्छादकत्वविरहेण वसने तद्दृष्टान्ततानुपपत्तिरुक्ता । अत्रेदं वक्तव्यं यत् उक्ते भगवतो वचने शरीरैः देहिनो जीवस्य आच्छादकत्वं नोक्तम्, किन्तु केवलं शरीरसम्बन्धमात्रमुक्तम् । स च सम्बन्धः सम्पूर्णस्य जीवस्य शरीरेण आच्छादनं विनापि उपपद्यते । 'वासांसि जीर्णानि' इत्यंशेनापि न विश्वव्यापिनो नरशब्दव्यपदिष्टस्य जीवस्य आच्छादकत्वकथने तात्पर्यम् । यतः नरपदमपि तत्र स्वप्रयोजकादृष्टवत्त्वसम्बन्धेन मनुष्यत्वव्याप्यनरत्वजातिप्रवृत्तिनिमित्तकतया विश्वव्यापि जीवपरम् । उक्तवचने नर-देहिशब्दौ विश्वव्यापिजीवपरौ एव । नरशब्द उक्तरीत्या जातिप्रवृत्तिनिमित्तकः, देहिशब्दश्च स्वजनकादृष्टवत्त्वसम्बन्धेन देहवत्परतया द्रव्यप्रवृत्तिनिमित्तकः । नर-देहिशब्दयोः प्रवृत्तिनिमित्तभेदाभ्युपगमश्च उभयोस्तदर्थयोः उपमानोपमेयभावोपपत्तये; तदर्थमुपमानोपमेयतावच्छेदकयोः भेदस्यावश्यकत्वात् । अत एवोक्तवचनबलेनापि मनसो जीवत्वसमर्थनं नोपपादयितुं शक्यम् ।

अथ मनसामणुतरत्वेन तदाश्रितसुखादीनामप्रत्यक्षत्वापत्तिः; षड्विधप्रत्यक्ष एवाश्रयमहत्त्वस्य हेतुत्वात् । अन्यथा परमाणुद्व्यणुकतदाश्रितगुणानामपि प्रत्यक्षं वारयितुं न हि शक्येत इति शङ्कां परिजिहीर्षुणा न्यायरत्नमहाशयेनावादि—

'महत्त्वानाश्रयस्पर्शवदन्यपरिमाणतः ।
प्रत्यक्षं जायते सर्वं महत्त्वादेव तन्न तु' ॥

अत्रायं तदीय आशयः प्रतिभाति—प्रत्यक्षं प्रति महत्त्वानाश्रयस्पर्शवद्भेदावच्छेदकीभूतं परिमाणं तादृशभेद एव वा कारणम्, न तु महत्त्वं कारणम्। तथा च परमाणुद्वयणुकादीनां महत्त्वानाश्रयस्पर्शवत्त्वेन तत्र तादृशस्पर्शवद्भेदावच्छेदकपरिमाणस्य तादृशभेदस्य वाऽसत्त्वेन न तेषां प्रत्यक्षत्वापत्तिः। मनसस्तु महत्त्वानाश्रयत्वेऽपि स्पर्शवत्त्वाभावेन तादृशस्पर्शवद्भेदावच्छेदकपरिमाणस्य, तादृशभेदस्य वा तत्र सत्त्वेन तदाश्रितगुणानां प्रत्यक्षत्वे न काप्यनुपपत्तिः।

अत्रेदं न्यायरत्नमहाशयवचनं विचार्यमाणं नौचित्यं लभते; यतो लाघवगौरवविचारपूर्वकं कार्यकारणभावावधारणं न्यायशास्त्रे सर्वप्रमुखं मन्यते। सम्पन्ने च तस्मिन्, तदाश्रयेण विचारान्तरं प्रस्तूयते। तत्सिद्ध्यनन्तरं बुद्धिमारोहद् गौरवं फलमुखतया नैर्गुण्येन नापेक्षणीयमित्येव न्यायशास्त्रीयविचारपद्धतेः मर्यादा।

तथा च परमाणुद्वयणुकादिगुणानां घटादिगतगुणानामिव प्रत्यक्षं कथं न भवति? इति प्रश्नो द्विधा समाधातुं शक्यः–१. प्रत्यक्षं प्रति महत्त्वानाश्रयस्पर्शवद्भेदस्य कारणतया, २. महत्त्वस्य कारणतया वा।

पक्षयोरनयोः कस्योपादेयता युक्ता? इति विचारे प्रस्तुते, प्रत्यक्षं प्रति महत्त्वत्वजातिपुरस्कारेण महत्त्वस्य कारणतापक्ष एवोचितः सिध्यति। यत उक्तस्पर्शवद्भेदत्वेन कारणताकल्पने महत्त्वानाश्रयस्पर्शवतोः विशेष्यविशेषणभावे विनिगमनाविरहेण महत्त्वाश्रयस्पर्शवद्भेदत्वेन स्पर्शवन्महत्त्वानाश्रयभेदत्वेन च द्विविधा कारणता आपद्यते। तत्रापि महत्त्वानाश्रयत्वस्योभयाभावमादाय महत्यपि सम्भवेन स्पर्शवद्भेदस्यापि उभयभेदमादाय परमाणुद्वयणुकादिषु सम्भवेन परिष्कृतयोरेव तयोः कार्यकारणभावावच्छेदककोटौ प्रवेशनीयतया गुरुतररूपाभ्यामतिगुरुतरस्य कार्यकारणभावद्वयस्य स्वीकरणीयतया महागौरवात्। एवं च लाघवात् प्रत्यक्षं प्रति महत्त्वस्यैव कारणत्वसिद्ध्या ज्ञानादीनामणुतरमनोनिष्ठत्वस्वीकारे तत्प्रत्यक्षत्वानुपपत्तिः दुष्परिहरैव।

एतस्मिन् सन्दर्भे न्यायरत्नमहाशयेनैषोऽप्यारोपः परेषां प्रदर्शितो यत्प्रत्यक्षं प्रति महत्त्वस्याकारणत्वे महत्त्वानाश्रयस्पर्शवद्भेदत्वेन वा कारणत्वे मनोगतानां सुखादीनामिव तद्गतानां कर्मवेगपरत्वापरत्वादीनामपि प्रत्यक्षत्वापत्तिपरिहाराय मानसप्रत्यक्षं प्रति कर्मादिभेदत्वेनापि कारणत्वकल्पनायां गौरवम्, तथा चैतद्गौरवनिरोधाय महत्त्वस्य प्रत्यक्षं प्रति कारणत्वकल्पनैव लाघवाद् गरीयसी। अतो मनोभिन्नानां महतामतिरिक्तजीवानां कल्पनमेवोचितम्। एतदारोपपरिहाराय तेन स्वपक्षेणैवं समाधायि—

'स्वानाश्रये सुखादीनां वारणाय भवन्मते।
कार्यकारणभावाच्च तत्रैवातीव लाघवम्'॥

अयमाशयः—तत्तद्व्यक्तिसमवेतानां जन्यानामन्येषूत्पादवारणार्थं स्वसमवेतत्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन सर्वस्यैव समवेतानामधिकरणस्यैव हेतुतायाः सर्वमत एव स्वीकरणमस्ति। एवं चातिरिक्तजीवकल्पनेऽनन्तजीवानामन्तर्भावस्यापि जीवसमसंख्यकतत्तद्व्यक्तित्वेन कारणत्वकल्पनमावश्यकम्। अन्यथा एकजीवसमवेतानां जीवान्तरेषु जननमापद्येत। न च मनसां सुखादिमत्त्वस्वीकारेऽपि एकः मनःसमवेतसुखादीनां

मनोरूपेषु जीवान्तरेषूत्पादवारणार्थं जीवान्तरवादिसमान एव कार्यकारणभाव इत्येतन्मते क्व लाघवम् ! प्रत्युत उक्तरीत्या परिमाणस्य प्रत्यक्षकारणतायां क्रियादिभेदस्य मानस-प्रत्यक्षकारणतायां च गौरवमेव पर्यवसितमिति वाच्यम्; मनःपदार्थानां सर्वसम्मततया तदीयक्लृप्तगुणकर्मणां स्वानधिकरणेषूत्पादवारणार्थमुभयवादिसम्मतकारणतयैव तद्गत-सुखादीनामप्येकैकसमवेतत्त्वनिर्वाहेण अनन्तकार्यकारणभावकल्पनाकृतगौरवानवकाशात् ।

पुनः, 'मनो न पदार्थान्तरमपि तु पवनपरमाणुरेव तत्' इति मते उक्तभेदस्य प्रत्य-क्षकारणत्वोपगमेऽपि मनोनिष्ठानां सुखादीनां प्रत्यक्षत्वानुपपत्तिः; तन्मते मनसा महत्त्वा-नाश्रयतया वायुपरमाणुरूपत्वेन स्पर्शवत्तया च तत्र महत्त्वानाश्रयस्पर्शवद्भेदस्यासम्भवादि-त्युक्त्वा न्यायरत्नमहाशयेनोक्तानुपपत्तिपरिजिहीर्षया प्रावाचि—

'त्रुटौ द्रव्यस्य विश्रामात् द्व्यणुकादेरलीकता ।
प्रत्यक्षे षड्विधे तस्मात् परिमाणं न कारणम्' ॥

अत्र तु प्रथममिदं चिन्त्यं यद् वायुपरिमाणस्य मनस्त्वकल्पनैव दुःशका; यतो देहाभ्यन्तरे अनेकेषां वायुपरमाणूनां सत्त्वेन विनिगमनाविरहात् सर्वेषां मनस्त्वोपगमे यस्य कस्यापि वायुपरिमाणस्य प्रत्येकेन्द्रियेण सम्बद्धतया ज्ञानयौगपद्यापत्तिः दुर्निवारा । तत्परिहारधिया कस्यचिदेकस्यैव मनस्त्वस्वीकारे तस्य स्वसदृशस्य वायुपरमाण्वितरस्य संयोगेन स्पर्शवतः स्थूलवायोरनारम्भकत्वेन तत्र स्पर्शकल्पनाया अनावश्यकत्वेन तत्र महत्त्वानाश्रयस्पर्शवद्भेदस्य सम्भवेनोक्तानुपपत्तिनिरवकाशा । स्वीकारे वा तादृशस्य महत्त्वानाश्रयस्पर्शवतो वायुपरिमाणस्य मनस्त्वे उक्तानुपपत्तेः सम्भावनया तत्परिहाराय प्रत्यक्षे उक्तभेदस्य कारणतां परित्यज्य त्रुटावेव अवयवधाराया विश्रान्तिमुपगम्य परमाणु-द्व्यणुकादीनामप्रामाणिकत्वप्रदर्शनेन प्रत्यक्षं प्रति महत्त्वस्य कारणतानिषेधो य उक्तो न्यायरत्नमहाशयेन, सोऽपि विचारं सोढुमशक्तः; त्रुटौ अवयवधाराया विश्रान्तेः स्वीकारस्य कथमप्यशक्यत्वात् ।

तथा हि त्रुटौ अवयवधाराया विश्रान्तिस्त्रुटेः नित्यत्वे परिफलति, तच्च न युक्तम्; यतोऽयं निर्बाधो नियमो यद् यत्र यत्र नित्यद्रव्यत्वं तत्र तत्र स्वजातीयत्व-स्वापकृष्टत्व-सम्बन्धाभ्यां परिमाणविशिष्टपरिमाणशून्यत्वम्; यथा मनसि विभुद्रव्येषु च । मनसः परिमाणं हि परमाणुरूपम्, अतो न तत् कस्यचिदणुपरिमाणस्यापेक्षया अपकृष्टं तत्सजातीयं च । अतस्तत्रोक्तसम्बन्धाभ्यां परिमाणविशिष्टपरिमाणशून्यत्वं निर्विवादम् । विभुद्रव्याणां परममहापरिमाणमपि न कस्यचिन्महत्त्वपरिमाणस्यापेक्षयाऽपकृष्टं तत्सजातीयं चेति तत्रापि उक्तसम्बन्धाभ्यां परिमाणविशिष्टपरिमाणशून्यत्वं निर्बाधम् । अतस्त्रुटेरपि अवयवधाराया विश्रान्तिभूमित्वेन नित्यतया तत्रापि परिमाणविशिष्टपरिमाणशून्यत्वेन भाव्यम्, परं तन्नास्ति; तदीयपरिमाणस्य घटादिपरिमाणस्य महत्त्वात्तेन सजातीयतया तदपेक्षयाऽपकृष्टतया च तत्र परिमाणविशिष्टपरिमाणस्यैव सत्त्वेन व्यापकाभावस्य व्याप्याभावव्यापितया तत्र परिमाणविशिष्टपरिमाणशून्यत्वस्य नित्यद्रव्यत्वव्यापकस्या-सत्त्वेन तत्र नित्यद्रव्यत्वस्याप्यसत्त्वात् । तदेवं महत्त्वशालित्रुटौ अवयवधाराविश्रान्ति-मूलकस्य नित्यद्रव्यत्वस्यासम्भवेन तदवयवतया द्व्यणुकादीनाम्, तदवयवतया च परमाणू-

नामवश्यमङ्गीकार्यतया तद्गतानां गुणानां प्रत्यक्षापत्तिपरिहाराय प्रत्यक्षं प्रति महत्त्वस्य कारणताभ्युपगमस्य दुर्निवारत्वेन ज्ञानसुखादीनां सर्वसिद्धप्रत्यक्षत्वोपपत्तये अणुतरे मनसि तेषां समवेतत्वकल्पना सर्वथाऽसम्भवैव ।

पुनरेतस्मिन्नेव प्रसङ्गे त्रयोदशे पृष्ठे न्यायरत्नमहाशयेनैष परपक्षोऽभ्यधायि— 'जीवस्यातिरिक्तत्वपक्षेऽपि महत्त्वस्य कारणत्वं परित्याज्यमेव, तथा च मनसां जीवत्वे तदीयकर्मपरत्वापरत्ववेगाख्यगुणानां मानसवारणार्थं मानसं प्रति क्रियाभेद-परत्वभेदापरत्वभेद-वेगभेदानां कारणत्वकल्पने तद्बाहुल्यमवच्छेदकगौरवं च । अतस्तत्तद्गुणशून्या चञ्चलजीव एव कल्पयितुमुचिता' इति ।

इमामुक्तिं निराचिकीर्षुणा तेनागादि—

'अनध्यक्षाददृष्टादेर्यतो जीवगमानसे ।
अवच्छिन्नतया देहहेतुता सर्वसम्मता' ॥ इति ।

अयमाशयः—भावनाख्यसंस्कारधर्माधर्मरूपादृष्टात्मगतपरिमाणैकत्वादिमानसवारणार्थमुक्तप्रत्येकधर्मावच्छिन्नभेदहेतुत्वकल्पनापेक्षया जीवसमवेतेषु संवेदनविषयाणामिच्छाद्वेषसुखदुःखकृतिमतीनामेव देहरूपद्रव्यावच्छिन्नत्वस्य सर्वानुभवसिद्धतया जीवसमवेतानां द्रव्यसमवेतानां वा मानसं प्रति देहत्वेन द्रव्यत्वेन वा धर्मेण अवच्छिन्नत्वसम्बन्धेन एकमेव हेतुत्वं भवताऽप्यङ्गीकृतम् । अस्मन्मतेऽपि तेनैव कारणबलेन सुखादीनामेव प्रत्यक्षम्, न तु मनसः; कर्मादीनामपि तदीयेषु तेषु शरीरानवच्छिन्नत्वस्य सर्वसम्मतत्वात् । एवञ्चाऽनन्तातिरिक्तजीवानामकल्पनकृतं लाघवं सुदृढमेव ।

अत्र पुनरिदं स्मार्यमाणमावश्यकं प्रतिभाति यत् त्रुटौ अवधारायाः विश्रान्तेर्दुर्घटतया, परमाणुद्व्यणुकानामवश्यं सिद्धतया, तेषां तदीयगुणानां च प्रत्यक्षत्वापत्तिपरिहाराय पूर्वप्रदर्शितलाघवाधारेण प्रत्यक्षं प्रति महत्त्वस्य कारणताया अनिवार्यत्वेनातिरिक्तजीवानामकल्पनप्रयुक्तलाघवम्, स्वसमवेतत्वावच्छिन्नं प्रति प्रत्येकजीवानां कल्पनकृतगौरवं च मनोऽन्यजीवसिद्धौ बाधकं न भवितुमर्हति; तदुपस्थितेः प्रत्यक्ष प्रति महत्त्वस्य कारणत्वसिद्ध्युत्तरं भावितया अतिरिक्तजीवसिद्धौ बाधकत्वासम्भवात् । स चातिरिक्तो जीवः 'नित्यात्मरूपः', 'न्यायशास्त्रीयविचारपद्धत्या देहात्मवादस्य सम्भावना' इत्येतन्मन्निबन्धानुसारेण 'शरीररूपो वा'—इत्यन्यदेतत् ॥

**मोहं रुणद्धि, विमलीकुरुते च बुद्धिम्,**
**सूते च संस्कृतपदव्यवहारशक्तिम् ।**
**शास्त्रान्तराभ्यसनयोग्यतया युनक्ति,**
**तर्कश्रमो न तनुते किमिहोपकारम् ! ॥**

# पाणिनिसम्प्रदाये भाष्यविरोधावहेलनम्

डॉ० हिन्दकेसरी

[ जयपुरस्थे केन्द्रीयसंस्कृतविद्यापीठे प्राध्यापकः ]

सर्वातिशायि प्रामाण्यं बिभ्रतो भगवतः पतञ्जलेर्मतस्याऽवहेलनं न श्रद्दधते 'यथोत्तरं मुनीनां प्रामाण्यम्' इति ज्ञापनपरा वैयाकरणाः। सत्यपि तादृशे प्रवादे स्वकीयमाचार्यत्वं ख्यापयन्तः केचन व्याख्यातारो महाभाष्यसम्मतानर्थान् दूषयाञ्चक्रुः, अन्यथैव वा प्रतिपादयामासुः। एतेषु काशिकाकारस्य, काशिकाविवरणपञ्चिकाकर्तुश्च नामनी प्रथमतया पं० युधिष्ठिरमीमांसक-भीमसेन-शास्त्रिप्रमुखैः विद्वद्भिरुदाह्रियेते। इमौ द्वावपि आचार्यौ भाष्यविरोधमुपेक्षेते, 'यथोत्तरं मुनीनां प्रामाण्यम्' इति वाक्येऽपि नैव बद्धादरौ। ये तावद् भाष्यस्य परमं प्रामाण्यं स्वीचक्रुः, अन्यमतानि भाष्यविरोधादुपेक्ष्यमित्युक्त्वा खण्डयाञ्चक्रुः, ते भट्टोजिदीक्षित-नागेशभट्टप्रमुखा वैयाकरणा अपि 'भाष्यमतं प्रौढिवादमात्रम्', 'एकदेशि भाष्यम्' इत्यादिवाक्यैर्निराकुर्वन्तो भाष्यविरोधं नैवाकलयन्निति आश्चर्यमेव। अत्रास्माभिः काशिकाया आरभ्य एतच्छास्त्रव्याख्यातॄणां केचन ग्रन्थांशा उदाह्रियन्ते, यत्र महाभाष्यकारस्य मतमुपेक्षितमिति स्पष्टा प्रतीतिर्भवति।

काशिका तावत् सूत्राणां वृत्तिग्रन्थः। स्वाभाविकमत्र सूत्रकारस्य समर्थनम्, सर्वेषां सूत्रोदाहरणानां प्रदर्शनम्। यानि खलु सूत्राणि भगवता पतञ्जलिना प्रत्याख्यातानि, तेषामल्पीयसी अपि चर्चा काशिकाकारेण न विधीयते, तत्सर्वं जानतापि मौनमेवाकलितमनेन। यत्र चास्मै भाष्यकृतः प्रत्याख्यानं न रोचते, तत्रायं दूषयति भाष्यनिष्कर्षम्। अत्र भवन्ति कानिचिद् उदाहरणानि—

आदौ तावत् 'ञमङणनम्' ( शि० सू० ६ ) इति सूत्रे ङमादिप्रत्याहारान् 'झभञ्' सूत्रस्थेन ञकारेण स्वीकृत्य मकारः प्रत्याख्यातो भाष्ये। काशिकावृत्तौ चात्र भाष्यमतमनूद्य प्रतिपत्तिगौरवरूपो दोषः प्रदर्शितः। तथाहि 'ङमो ह्रस्वादचि' ( पा० सू० ८-३-३२ ) इत्यत्र ङञ्प्रत्याहाराश्रयणे झकारभकारौ पदान्तौ न स्तः, इति कृत्वा ङुट्-णुट्-नुटः त्रय एव भविष्यन्ति, 'झ भौ' आगमौ न भवतः— इति प्रतिपत्तिगौरवम्। समर्थितं चैतद् जिनेन्द्रबुद्धिना न्यासकारेण, पदमञ्जरीकृता हरदत्तेन च।

'मुखनासिकावचनोऽनुनासिकः' ( पा० सू० १-१-८ ) इत्यत्र भाष्यकृता प्रासादवासिन्यायेन मुखग्रहणं प्रत्याख्यातम्। काशिकायां तु मुखग्रहणाभावे अनुस्वारस्यैव अनुनासिकसंज्ञा स्यादित्युक्तम्। अत्र तावद् हरदत्तेन, जिनेन्द्रबुद्धिना च अनुनासिकवर्णोच्चारणे त्रीणि दर्शनानि उद्धृतानि—

१. समस्त एव अनुनासिकवर्णो मुखेन नासिकया च उच्चार्यते।

२. पूर्वो भागो मुखेन, परस्तु नासिकया उच्चार्यते।

३. पूर्वो भागो नासिकया, परो मुखेन उच्चार्यते।

अत्र प्रथमदर्शने एव प्रासादवासिन्यायेन 'नासिकावचनः' इत्यनेन मुखनासिकवचनानां ग्रहणं सम्भवति। अनन्तरयोर्द्वयोर्दर्शनयोः नासिकान्वयः पूर्वभागे परभागे वर्त्तत

इति नासिकावचन इत्यनेन मुखनासिकावचनस्य ग्रहणं न प्राप्नोति। न्यासकारस्त्वत्र अन्वर्थसंज्ञया अपि अनन्तरयोर्दर्शनयोः स्वीकृतिं दर्शयति। तथा हि—अनु पश्चान्नासिका व्याप्रियते यस्मिन्, अथवा अनु पश्चान्नासिकया व्याप्रियतेऽस्मिन्; मुखस्य तु प्रकृतत्वाद् बोधो भवत्येव। अयं चात्र भाष्यकारमभिलक्ष्य ब्रूते—'प्रासादवासिन्यायमाश्रित्य ये मुखग्रहणं प्रत्याचक्षीरन् तेषां निराकरणार्थम् पूर्वोक्तयोर्दर्शनयोरन्यतरस्याभ्युपगमः' इति।

'एङ् प्राचां देशे' ( १-१-७५ ) इत्यस्मिन् सूत्रे प्राचामित्यस्य भाष्यमतेन आचार्यविशेषणत्वम्, काशिकायां च देशविशेषणत्वम्—इति प्रसिद्ध एव मतभेदः।

'कारके' ( १-४-२३ ) इति अधिकारसूत्रे कारकशब्दः क्रियापरः; 'यावद् ब्रूयात् क्रियायामिति तावत् कारके' इति प्रकृतसूत्रस्थभाष्यात्। एवं च क्रियायामवधिभूतम् अपादानमित्यादिरीत्या सूत्रार्थो निष्पाद्येत। अन्वर्था वा संज्ञा—करोतीतिकारकमिति। अयमप्यर्थो भाष्यारूढ एव। अस्मिंस्तावद् द्वितीयेऽर्थे सम्प्रदानापादानयोः कारकत्वं न सिध्यति, यः कथञ्चिद् अवधिभवनरूपं व्यापारमादाय अपादानस्य कारकत्वमुच्यते, दातृबुद्धिस्थत्वेन सम्प्रदानस्य कारकत्वं तर्हि प्रतिज्ञानिर्वाह एव; व्यापाराश्रयत्वं तु नास्त्येव। ज्ञापितोऽयमर्थः भाष्यकृता अपादानसम्प्रदानातिरिक्तकारकाणां कर्तृभावं दर्शयता। काशिकाकारस्तु—कारकशब्दश्च निमित्तपर्यायः। कारकं हेतुरित्यनर्थान्तरम्। कस्य हेतुः? क्रियाया इत्युक्त्वा कारकशब्दस्यान्यार्थमेव प्राह, एव च—अपादाने सम्प्रदाने च कारकत्वं वर्त्तत इत्युक्तं भवति। हेतुरत्र निर्व्यापारसाधारण एव। तथा च कर्तृकरणादीनां व्यापारवतामपि हेतुपदेन ग्रहणं काशिकाकारस्य सम्मतम्।

'तनादिकृञ्भ्य उः' ( ३-१-७९ ) इत्यत्र सूत्रे तनादिगणपठितत्वेनैव कृञ उ प्रत्ययस्य सिद्धौ कृञ्ग्रहणं भाष्ये प्रत्याख्यातम्। काशिकाकारेण तु कृञ्ग्रहणस्य नियमार्थता उक्ता-अन्यत्तनादिकार्यं मा भूदिति। तेन अकृत इत्यादौ 'तनादिभ्यस्तथासोः' इति सिचो लुग् न भवति। भाष्यकृता इदमपि प्रयोजनं निराकृतमेव, तथापि काशिकायामादृतो नियमार्थपक्षः। समर्थितञ्चैतद् न्यासकारेण-येननाप्राप्तिन्यायेन 'तनादिभ्यस्तथासोः' ( २-४-७९ ) इति 'ह्रस्वादङ्गात्' ( ८-२-२७ ) इत्यस्य बाधकं स्यात्, एवं च 'अकृत' इत्यादौ विकल्पेन सिचो लुक् स्यादिति।

'धातोः' ( ३-१-९१ ) इति अधिकारसूत्रं 'धातोरेकाचो' ( ३-१-२२ ) इत्यस्मात् सूत्राद् धातोरित्यस्यानुवृत्तिं स्वीकृत्य प्रत्याख्यातम्। हरदत्तकैयटयोः सम्मतं चैतत्। काशिकाकारस्तु भाष्यानुक्तम् आर्धधातुकसंज्ञारूपं प्रयोजनं दर्शयति-धातोरित्येवं विहितस्य यथा स्यात् इह मा भूत्—लूभ्याम्, लूभिरिति। 'क्विबन्ता धातुत्वं न जहति' इति लू इत्यस्माद् भ्यामादौ आर्धधातुकसंज्ञायां सत्याम् इट् स्यात्। द्वितीयेन धातोरित्यधिकारेण धातोरित्येवं धातुशब्दमुच्चार्य विहितस्यैव आर्धधातुकसंज्ञा, तेनात्र भ्यामादेः आर्धधातुकसंज्ञा न भवति। यद्यपि अत्रार्धधातुकसंज्ञानिवृत्तये सनि धातोः 'संज्ञायाम्' ( ३-२-१४ ) इत्यतः धातोरित्यस्यानुवृत्तिकल्पना कैयटादिभिर्विहिता, किन्तु भाष्यानारूढ एव सोऽर्थः। आर्धधातुकसंज्ञारूपं प्रयोजनं भाष्यानुक्तमेव। 'स्त्रियाम्' ( ४-१-३ ) इत्यस्मिन् सूत्रे सत्वादिगुणानामुपचयापचयसाम्यावस्थारूपं पुंस्त्रीनपुंसकलिङ्गस्वरूपमुक्तम्, संस्त्यानविव-

क्षायां पुमान्, उभयोरविवक्षायां नपुंसकमित्यादिना। इदं दर्शनं परवर्त्तिभिः कौण्डभट्टादिभिः सर्वैरेव स्वीकृतम्। काशिकाकारस्तु 'सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इव बहुप्रकारा व्यक्तयः' इत्युक्त्वा 'आश्रयस्य वैशिष्ट्याद् (पदार्थसामर्थ्याद्) व्यज्यमाना काचिद् व्यक्तिः लिङ्गम्, आश्रयाणां च अतीन्द्रियत्वात् आकाशादिषु अदृश्यपदार्थेषु इदं स्त्रीत्वादिकमुपदेशव्यङ्ग्यमेव' इत्यनया रीत्या ततोऽन्यद् दर्शनमाश्रयते। अत्रैव काशिकाव्याख्यायां न्यासकारः भाष्यमतमुपहसति—'अयुक्तमेतत्' तथा हि–उपचीयते कुमारीत्यपि कुमारी स्त्री भवति न पुमान्, अपचीयते वृक्ष इति संस्त्यानविवक्षायामपि वृक्षः पुमानेव भवति न स्त्री, उपचीयते कुण्डमपचीयते वा इत्युपचयापचययोरविवक्षायामपि कुण्डं नपुंसकमेव भवति, न पुमान् नापि स्त्री। यद्यपि भाष्यकारस्य आर्षं तद्दर्शनम्, ततोऽन्येन केनापि दर्शनेन लिङ्गव्यवस्थायाः समाधानं न सम्भवति, तथापि भाष्यमतखण्डनेऽस्याचार्यस्य तादृशी प्रवृत्तिः भाष्यस्य प्रतिपक्षित्वमेव दर्शयति।

'ऐकागारिकट् चौरे' (५-१-११३) अत्रापि भाष्यवृत्तिग्रन्थयोः विरोधः प्रसिद्ध एव। भाष्ये तावदिदं सूत्रं प्रत्याख्यातम् 'एकागारान्निपातनानर्थक्यं ठञ्प्रकरणात्' इत्यादिना। यदि तावत् चौरे एव निपातनमिष्यते, तर्हि 'एकागाराच्चौरे' इत्येव ब्रूयात्। काशिकाकारस्तु चौरे नियमार्थं वचनमित्याह। सूत्रप्रत्याख्यानपक्षे एकागारं प्रयोजनमस्य भिक्षोरित्यस्मिन्नर्थे ठञ् न स्यादेतदर्थम् अनभिधानमेवाश्रयितव्यम्। 'ऐकागारिकट्' इत्यत्र टकारप्रयोजनमपि वृत्तिकृता दर्शितम्—'टकारः कार्यावधारणार्थः—'ङीबेव भवति न ञित्स्वर' इति भाष्यवार्त्तिकयोः प्रत्याख्यानसामर्थ्यात् ञित्स्वरोऽपि भवत्येवेति हरदत्तकैयटयोः सम्मतिः। उक्तमेतन्नागेशभट्टेन—अत्रत्यवृत्तिर्भाष्यविरुद्धेति।

'तसिलादिष्वाकृत्वसु च' (६-३-३५) इत्यत्र सूत्रेऽनिष्टवारणार्थं भाष्यकृता परिगणनं विहितम्। न्यासकारोऽनेन परिगणनेन नितरां रुष्ट इव प्रतीयते, आदौ स परिगणनमेव निराकरोति–भाष्यकारस्य मतमेतत्, न तु सूत्रकारस्य। न चासति परिगणने किञ्चिदनिष्टमापद्यते। येषु तसिलादिष्वनन्तर्भूतेषु पुंवद्भाव इष्यते तेषूत्तरसूत्रे 'क्यङ्मानिनोश्च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद् भविष्यति। येषु तसिलादिषु अनन्तर्भूतेषु नेष्यते, तत्र 'न कोपधायाः' इति नेति योगविभागान्न भविष्यतीति। अग्रे च परिगणने भाष्यकारेण उदाहृते दारिदिकेत्यत्र पुंवद्भावो न प्राप्नोति कप्रत्ययस्यापरिगणितत्वादिति दोषं प्रदर्शयति—तथा हि दरदोऽपत्यं स्त्रीति विग्रहे द्व्यञ्मगधकालिङ्गेत्यणि तस्य 'अतश्च' इतिलुकि 'प्रागिवात्कः' इति कप्रत्यये तसिलादिषु इत्यनेन पुंवद्भावे दारदशब्दो भवति, टापि इत्वे च दारदिकेति। एतच्च भाष्यकृता 'पुंवत्कर्मधारय' (६-३-४२) इति सूत्रे ह्रस्वपुंवद्भावयोः प्रदर्शनसमये उदाहृतम्। तसिलादिषु कप्रत्ययस्य परिगणनं नास्तीति कथं पुंवद्भावः? इत्याशङ्क्य पुनः महाभाष्यकारमधिक्षिपति न्यासकारः—'एतद्भाष्यकारः पृष्टव्यो यः परिगणनं करोति, न तु सूत्रकारः'। कैयटेन तु 'विप्रतिषेधप्रदर्शनानुरोधात् कप्रत्ययस्यापि तत्र परिगणनमनुमीयते' इति भाष्यप्रामाण्ये बद्धादरेण तत्र समाहितम्।

'धि च' (८-२-२५)। अत्र महाभाष्यकृता धकारे परे सकारमात्रस्य लोपो भवतीति स्वीकृत्य चकासृधातोर्लोटि मध्यमपुरुषैकवचने 'चकाधि' इत्येव रूपमिति स्वीकृतम्। वृत्ति-

कारस्तु 'इतः प्रभृति सिचः सकारलोप इष्यते' इत्युक्त्वा 'चकाद्धि पलितं शिरः' इत्यादौ न सलोप इति भिन्नं मतं प्रादर्शयत्। 'भाष्यमते च पयो धावतीत्यत्र सलोपवारणार्थं यत्नान्तरमास्थेयम्' इति दोषमुद्भावितवान्। इतः परमग्रिमैः त्रिभिः सूत्रैः सिच एव लोप इति वार्त्तिककारस्याभिप्रेतम्, वृत्तिकृता च तदेवादृतम्। भाष्यकारस्तु 'सग्धिः' 'बब्धाम्' इत्यादौ छान्दससकारलोपकल्पनापेक्षया सकारमात्रस्य लोपमङ्गीचकार। 'पयो धावति' इत्यत्र सलोपवारणार्थम् हरदत्तेन अन्तरङ्गपरिभाषाया प्रवृत्तिर्दर्शिता। पदद्वयापेक्षत्वेन बहिरङ्गः सकारलोपः, रुत्वं तु अन्तरङ्गम्। इमौ द्वावपि विधी त्रैपादिकौ, तेनात्रान्तरङ्ग-परिभाषाया प्रवृत्तिर्न युक्ता। न्यासकारस्तु व्यवस्थितविभाषाश्रयणमेवोपायान्तरमित्याह। एवं च क्लेशो वर्तत एव।

'अगौः गौः समपद्यत गोऽभवत्' इत्यत्र च्व्यन्तस्य प्रगृह्यसंज्ञावारणार्थं वार्त्तिककृता 'ओतश्च्विप्रतिषेधः' इति वार्त्तिकमारब्धम्, भाष्यकृताः' 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इत्युक्त्वा निराकृतं तत्। वार्त्तिककारः च्व्यन्तस्थले मुख्यार्थमेवाश्रित्य वार्त्तिकमारभते, अमहान् महान् सम्पद्यते महद्भूतश्चन्द्रमाः, अशुक्लः शुक्लः सम्पद्यते शुक्लीभवति इत्यादौ आरोपाभावाद् नास्त्येव गौणत्वम्। अयं चार्थः प्रतिपादितो हरिकारिकायाम्—

> गोयुष्मन्महतां च्व्यर्थे स्वार्थादर्थान्तरे स्थितौ।
> अर्थान्तरस्य तद्भावस्तत्र मुख्योऽपि दृश्यते ॥ (वा० प० २-२-७९)

च्व्यन्तेऽपि मुख्यार्थस्य प्रतीतिरिति वार्त्तिकमतमविज्ञाय भाष्यकृता गौणमुख्यन्यायेन समाहितम्। अत्रोत्प्रेक्षितं पुण्यराजेन—'भाष्यकारस्त्वभिप्रायानभिज्ञ एवान्तरङ्गत्वात् 'गौणमुख्ययोर्मुख्ये सम्प्रत्ययः इत्येवमत्र न प्रगृह्यसंज्ञा'। अत्रास्तु नाम तथा भाष्यकारस्य आशयानभिज्ञत्वम्, किन्तु महद्भूतश्चन्द्रमाः—इत्यत्र आत्ववारणार्थम् उपायान्तरं नास्तीति भाष्यमतस्यैव युक्तत्वम्। च्विप्रत्ययान्तप्रकृतौ भेदस्तु भवत्येव, तेनात्र गौणत्व-व्यवहारः।

'उपदेशेऽजनुनासिक इत्' (१-३-२) इति सूत्रे 'उपदिश्यतेऽनेनेति करणे घञ् प्रत्ययो बाहुलकात्' इत्युक्तम् वृत्तिकारेण। प्रक्रियाकौमुदीकृता च भाष्यमतमादृत्य करणे घञ् इत्येव प्रतिपादितम्। भट्टोजिदीक्षितास्तु उपदेशशब्दस्य आद्योच्चारणार्थतां प्रतिपादयन्तो भावे घञ् इत्याहुः। प्रतिपादितश्चात्यमर्थो महता घटाटोपेन प्रौढमनोरमायाम्—'यद्यपि उपदिश्यतेऽनेनेति करणव्युत्पत्त्या उपदेशः शास्त्रम् इति भाष्यवृत्त्यादिषु व्याख्यातम्, तथापि तत् प्रौढिवादमात्रम्' इत्यादिना। यद्यपि नागेशभट्टेन इदं दीक्षितमतं निराकृतमेव, तथापि दीक्षितैस्तु भाष्यविरोध उपेक्षित एव।

हलन्त्यम् (१-३-३), आदिरन्त्येन सहेता (१-१-७१) इत्यनयोरन्योन्याश्रय-दोषवारणार्थम् भाष्ये वार्त्तिकद्वयं व्याख्यातम्—'लश्चेति वक्तव्यम्' इत्यनेन पृथक्तया लकारस्य इत्संज्ञा वक्तव्या, अथवा एकशेषनिर्देशोऽयम्—हल् च ल् च हलिति, वार्त्तिकद्वयमपि भाष्यकृता तथैव व्याख्यातम्, तथा च सिद्धान्तपक्ष एवायम्। सिद्धान्तकौमुदीग्रन्थे तु सम्पूर्णस्यैव 'हलन्त्यम्' इति सूत्रस्यावृत्तिर्विहिता। मनोरमायां तावद्दीक्षितैरेव एकशेष-

निर्देशोऽयमित्यस्य महता घटाटोपेन खण्डनं विहितम्। सूत्रावृत्तिर्भाष्यानुक्ता सिद्धान्तरूपेण समास्थितेति भाष्यस्य च खण्डनमेव कृतम्।

सर्वादीनि सर्वनामानि ( १-१-२७ ) इति सूत्रे भाष्यकृता सर्वादिगणे उभशब्दस्य पाठः प्रत्याख्यातः; कप्रत्ययेनैव इष्टसिद्धेरिति। भट्टोजिदीक्षितैस्तावत् प्रौढमनोरमायामस्यापि भाष्यस्य प्रौढिवादत्वमेव उक्तम्।

परवर्त्तिवैयाकरणेषु नागेशस्तावद् भाष्ये कृतभूरिपरिश्रमः 'यथोत्तरं मुनीनां प्रामाण्यम्' इति वाक्येऽपि परिभाषावदेव ज्ञापकमुपस्थापयति। ततोऽस्य भाष्यविरोधः स्वप्नेऽपि न सम्भाव्यते, तथापि अनेकत्र एकदेशिभाष्यमित्यादिना भाष्यमपलपति। हलन्त्यमिति सूत्रे लघुशब्देन्दुशेखरे उपदेशशब्दः करणघञन्त इति व्यवस्थापितम् एतद् विरुद्धम्। तस्मिन्निति ( १-१-६७ ) सूत्रे पञ्चम्याः षष्ठी प्रकल्पकत्वपक्षे सनः सनेव आदेशो भविष्यतीति समाहिते 'नैवं शक्यम् इत्संज्ञा न प्रकल्पेत उपदेशे इतीत्संज्ञोच्यते' इति भाष्यम् एकदेशिभाष्यम्; अतस्तद्बलेन उपदेशपदस्य आद्योच्चारणार्थकत्वं न सम्भवतीति नागेशभट्टानामाशयः। अत्र षष्ठीप्रकल्पकत्वभादाय भवतु एकदेशिभाष्यं तत्, किन्तु 'उपदेश इतीत्संज्ञोच्यते' इति वाक्यस्य कया युक्त्या अपलापः स्यात्। यद्येतदनभिमतं स्यात् तर्हि भाष्यकारस्तत्रैव निराकुर्यात्।

किमपि नवीनं कल्पनीयमिति नागेशभट्टेन 'असिद्धं बहिरङ्गमन्तरङ्गे' ( पृ० ५० ) इति परिभाषायाम् अर्थकृतं बहिरङ्गं नाश्रीयते—इति अनेकधा ज्ञापकैः साधितम्। 'वर्णो वर्णेन, ( २-१-६९ ) 'तदस्यास्त्यस्मिन्निति' ( ५-२-९४ ) सूत्रे च भाष्ये कर्मधारयबहुव्रीहिसमासयोर्विप्रतिषेधं प्रदर्श्य 'नैष युक्तो विप्रतिषेधः; अन्तरङ्गः कर्मधारयः, काऽन्तरङ्गता ? स्वपदार्थे कर्मधारयः अन्यपदार्थे बहुव्रीहिः' इत्यनेन अर्थनिमित्तकस्य बहिरङ्गत्वं स्पष्टमेवोक्तम्; अत्रापि नागेशेन पूर्वोक्तयुक्त्या ( एकदेशिभाष्यरूपया ) स्वपक्षः समर्थित्तः। अन्यच्चात्र 'न तिसृचतसृ' इति सूत्रमपि ज्ञापकतया उपन्यस्तम्, यदा त्रिशब्दस्यैव लिङ्गत्रयमभिधेयम्, तदा कथं स्त्रीत्वरूपार्थाश्रयेण तिस्रादेशस्य बहिरङ्गतेति विचार्यमेव। अत्रैव अतोऽमिति तपरकरणं ज्ञापकतया उपन्यस्तम्, तदपि अयुक्तमेव। तपरकरणं मुखसुखार्थमित्येव सिद्धान्तः, अश्च आश्चेति समाहारद्वन्द्वेऽपि अमित्येव रूपम्। अनभिधानमेव एतादृशान्यरूपाणाम्।

'सन्निपातलक्षणो विधिः' ( पृ० ८५ ) इति परिभाषायां न केवलं पूर्वपरसम्बन्धरूप एव सन्निपातः, विशेषणविशेष्यभावरूपोऽपि सन्निपातो गृह्यते इति परिभाषेन्दुशेखरे निरूपितम्। क्त्वमेजन्तः ( १-१-३९ ) इति सूत्रभाष्ये तु 'न प्रत्ययः सन्निपातलक्षणः' इत्यनेन 'पूर्वपरसम्बन्धः एव सन्निपात' इत्येव ज्ञापितम्। नागेशभट्टेनास्यापि एकदेश्युक्तित्वेनासाधकत्वमुक्तम्। अस्य भाष्यस्य कथमेकदेश्युक्तित्वम् ?—इत्यत्र मौनमेवाकलितम्।

'अनन्त्यविकारेऽन्त्यसदेशस्य' ( पृ० १०३ ) इति परिभाषां निराकुर्वता महाभाष्यकृता 'न सम्प्रसारणे सम्प्रसारणम्' (६-१-३७ ) 'नैतस्याः परिभाषायाः प्रयोजनानि' इत्युक्तम्, नागेशभट्टानां तु 'न सम्प्रसारणे' इत्यस्मिन्नेव सूत्रेऽस्याः प्रयोजनानि न सन्ति

इत्यर्थपरमेव व्याख्यानम् । अस्य च भाष्यस्य सामान्यशास्त्रविषयतैव युक्ता, तथा चेयं परिभाषा निष्फला । यत्तु 'अनस्तक्षणः' इत्यस्याः प्रयोजनमुक्तम्, सैव एकदेश्युक्तिः । एवं चात्र नागेशभट्टेन एकदेश्युक्तिरेव सिद्धान्तरूपेण स्वीकृता । एवं प्रतीयते—स्वेच्छयैव सिद्धान्तिभाष्यम्, एकदेशिभाष्यं वा कल्प्यते इति ।

उदाहरणमात्रमेतद् आधुनिकव्याख्यातॄणाम् । बहवोंऽशाः भाष्यविरुद्धा अवलोक्यन्ते । सर्वेषा चैषां भाष्ये परमप्रामाण्यबुद्धिरिति ।

# स्व० आचार्यबदरीनाथशुक्लमहाभागाः



आचार्यबदरीनाथशुक्लाः शुक्लयशोगुणाः ।
उत्तीर्य जगदम्भोधिं शिवसायुज्यमाप्नुवन् ।।

जन्म ४-७-१९१४ ई० : शि० सा० २२-११-१९८७

# आचार्यपण्डितबदरीनाथशुक्लमहाभागाः

**श्री सर्वेश्वर राजहंसः**
[ सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य न्यायवैशेषिकविभागे प्राध्यापकः ]

अस्मच्चरितनायकोऽयं श्रीशुक्लमहाभागोऽद्यतः त्र्यधिकसप्ततिवर्षपूर्वम् ( ४ । ७ । १९१४ ईशाब्दे ) उत्तरप्रदेशस्य बस्तीजनपदे घनघटाग्रामे पवित्रसरयूपारीणब्राह्मणकुले गर्गगोत्रपरम्परायां श्रीमद्राजारामशुक्लस्य गृहं स्वजन्मनाऽलञ्चकार। शैशवेऽयं स्वबाललीलाभिः मातरं पितरं च परितोष्य पञ्चवर्षमिते वयसि तत्रैव पण्डितप्रवरश्रीरघुवर प्रसादशुक्लस्य प्रथमविद्यागुरोः सविधे व्याकरणं काव्यं च साधु अधीत्य, प्राथमिकीं शिक्षां समपूरयत्।

तदनन्तरम्, पितुराज्ञया, सम्प्राप्तभाषीयव्युत्पत्तिवैशद्योऽयमुच्चशिक्षायै वाराणसीमाश्रयत्। तत्र काशीहिन्दूविश्वविद्यालये मनीषिमण्डलस्य मणिकल्पात् मध्वसम्प्रदायाचार्य-गोस्वामिश्रीदामोदरलालमहोदयात् साहित्यशास्त्रम्, तर्करत्नश्रीशङ्करदेवभट्टाचार्यमहोदयान्न्यायविद्याया वङ्गीयपरम्पराम्, महामहोपाध्यायश्रीबालकृष्णमहोदयान्न्यायविद्याया मैथिलपरम्पराम्, विशदां वेदान्तविद्याञ्च श्रमक्रमाभ्याम् आत्मसादकरोत्।

एतदन्तराले विद्यालयेषु विश्वविद्यालये वा यथासमयं सम्पन्नासु वादविवादगोष्ठीषु निबन्धलेखप्रतियोगितासु च सदैव प्रथमस्थानलाभेन विद्यार्थिवर्गे, शास्त्रीयविचारसभासु शास्त्रीयासाधारणपाण्डित्यप्रकाशनेन च विद्वद्वर्गे अयं पण्डित शुक्लमहाभागः महतीं कीर्तिमलभत। भारतभूषणं महामनाः पण्डितमदनमोहनमालवीयमहोदयः शुक्लमहोदयस्य प्रतिभापारमितया सन्तुष्टः कुलपतेरधिकारेण काशीहिन्दूविश्वविद्यालये इमं महाभागम् प्रागेवाचार्यपरीक्षोर्णतातः न्यायशास्त्राध्यापकपदे न्ययोजयत्।

आपञ्चदशवर्षाणि तत्राध्यापनपाटवोद्भूतेन प्रभूतेन यशसा विभूषिताः पं० शुक्लमहाभागाः १९५२तमे ईशाब्दे काशिकराजकीयसंस्कृतमहाविद्यालये प्रादेशिकशासनेन ज्येष्ठाचार्यपदे नियोजिताः।

१९५८तमे ख्रीष्टाब्दे वाराणसेयसंस्कृतविश्वविद्यालयेऽस्य महाविद्यालयस्य विलये सञ्जाते श्रीशुक्लमहाभागास्तत्र न्यायवैशेषिकविभागस्य अध्यक्षपदे नियुक्ताः। तत्पदेन शास्त्रसेवां वितन्वाना इमे सम्पूर्णे भारतवर्षे दार्शनिकजगति, विशेषेण नव्यन्यायशास्त्रस्य परम्परागतप्रौढपाण्डित्यक्षेत्रे, मार्तण्ड इव विद्योतमाना आसन्। अनेकासु देशस्य मूर्धन्यशिक्षासंस्थासु सेवाकाल एव ग्रीष्मावकाशे विशेषामन्त्रणेन गुर्जरमहाराष्ट्रादिषु निजोज्ज्वलप्रभावेण भासमानानन्नेकजैनाचार्यान् न्यायशास्त्रे जैनदर्शने च परिपुष्टपाण्डित्यानकुर्वन्।

इमे विगतत्रिंशद्वर्षपर्यन्तं काश्यामायोजितासु प्रायः सर्वास्वेव पण्डितसभासु नैकशास्त्रीयविषयेषु स्वकीयस्य प्रौढशास्त्रीयपाण्डित्यस्य परिचयं वितन्वानाः तासु तासु पण्डितसभासु निष्पक्षमाध्यस्थ्यमकुर्वन्।

विश्वविद्यालयसेवातो निवृत्त्यनन्तरं देशस्य विभिन्नभागेषु शास्त्राध्यापनानुभवसमृद्धिं विकीर्य पं० शुक्लमहाभागाः शास्त्रसेवाभारभन्त। भारतशासनेन फ्रांसदेशस्य

राजधान्यां पेरिसनगरे १९७७तमे ईशाब्दे समायोजिते विश्वसंस्कृतसम्मेलने भारतदेशस्य प्रातिनिध्यसम्पादनाय पं० शुक्लमहाभागाः नियोजिताः। इमे तत्रोपस्थाय भारतीयदर्शनानां संस्कृतवाङ्मयस्य च समुत्कर्षमख्यापयन्। १९७८तमे वर्षे च प्रादेशिकशासनेन इमे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिपदे, उत्तरप्रदेश संस्कृताकदम्या अध्यक्षपदे च अभिषिक्ताः। एतत्पदद्वयमलंकुर्वद्भिः पं० शुक्लमहाभागैः सम्पादिता संस्कृतसेवा न कदापि विस्मृता भवितुमर्हति।

पं० शुक्लमहाभागेन लिखिता अनेके निबन्धाः न्यायशास्त्रीयग्रन्थाश्च मुद्रणं-प्रकाशनं चावाप्य देशस्य छात्रपरिवारं विद्वन्निवहश्च उपकुर्वन्तः प्रमोदयन्तश्चैव विद्यन्ते।

१९८३तमे वर्षे स्वतन्त्रतादिवसोत्सवप्रसङ्गे अगस्तमासस्य पञ्चदशतिथौ पं० शुक्लमहाभागाः महामान्येन भारतराष्ट्रपतिना प्राचीनपरम्पराया विशिष्टविदुषां सम्मानाय भारतीयशासनेन निर्धारितेन राष्ट्रपतिपुरस्कारेण सत्कृता।

एभिः न्यायशास्त्रीयविचारपद्धतिमाश्रित्य अनेकेषां नवनवानां मतानां प्रतिष्ठापनमपि कृतम्। १९८५तमे वर्षे ऋषिपत्तने भारतीयदार्शनिकानुसन्धानपरिषदा समायोजितायामखिलभारतीयन्यायपण्डितसंगोष्ठ्यां ख्यातिङ्गतानां नैयायिकानामन्येषाञ्च विदुषां समुपस्थितौ पं० शुक्लमहाभागै सोद्घोषं न्यायशास्त्रीयविचारपद्धत्या देहात्मवादमतस्य सर्वथा नूतनतथ्यैः प्रतिष्ठापनं विहितम्। एतदतिरिक्तं दर्शनशास्त्रेषु वर्णितस्य मोक्षस्वरूपविषयेऽपि श्रीमद्भिः एवमेव नूतनतथ्यानामुद्भावनं कृतम्।

सम्प्रतीमे दिल्लीस्थित-भारतीयदार्शनिकानुसन्धानपरिषदा ( आई० सी० पी० आर० ) नव्यन्यायशास्त्रे विशिष्टानुसन्धानकार्यार्थं ज्येष्ठानुसन्धातृपदे ( सीनियरफेलो ) सर्वोच्चमानदेयेन नियोजितास्तत्कार्यं तत्परतया पूरयन्त आसन्। इत्थमेभिः स्वजीवनकाले अधीतमध्यापितं यशश्च बहु अर्जितम्।

परं हन्त ! १९८७तमख्रीष्टाब्दस्य नवम्बरमासस्य द्वाविंशदिनाङ्के एषां महाभागानामाकस्मिकं निधनं सञ्जातम्। एतेनासामयिकनिधनेन सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, संस्कृतसमाजः, अन्ये च जनाः मर्माहता इव सञ्जाताः। क्षतेरस्याः पूर्तिः असम्भवेव प्रतीयते। एतेषां महाभागानां देहावसानेन संस्कृतसमाजस्य विशेषतः नव्यन्यायशास्त्रीयप्रौढ़पाण्डित्यपरम्पराया महती क्षतिः समपद्यत।

आचार्यपण्डितशुक्लमहाभागानां प्रतिभा, गतिशीलता, अगाधज्ञानवत्ता, प्राशासनिककार्येषु पटुता, सामाजिकनिष्ठा—इत्येते गुणाः चिरस्मरणीया एव। हन्त ! भारतीयसंस्कृतवाङ्मयस्य परम्परागतप्रौढ़पाण्डित्यस्य च मुखरतमः स्वरोऽद्य मूकः सञ्जातः।

# योगः कर्मसु कौशलम्

डॉ० भक्तिसुधा मुखोपाध्याया

●

## प्रथमं दृश्यम्

**नान्दी—**

गीताज्ञानमुपाश्रित्य लोकाः कृष्णेन पालिताः।
योगज्ञानमुपाश्रित्य योगीन्द्रेण कृताः क्रियाः॥

( **नान्द्यन्ते** ) **सूत्रधारः**—आदिष्टोऽस्मि 'योगः कर्मसु कौशलम्' इति नाटकमेकं प्रयोक्तुम्। दार्शनिकं नामैतत् न जाने सामाजिकानां रोचकं भविष्यति न वा! यथा तथा वा भवतु, अधुना स्वकर्तव्यमनुष्ठेयम्। ( श्रुतिमभिनीय ) कुतो नरनार्योरुच्चैः संवादः श्रूयते? आं. ज्ञातम्! एतौ योगीन्द्रदम्पती परस्परं कमपि विषयमधिकृत्य विवादं कुरुतः। अपरामि तावत्।

( ततः प्रविशति सपत्नीको योगीन्द्रः )

**मनोरमा**—ननु सर्वकार्येषु दीर्घसूत्री एव भवान्। भवता 'कैकेयी-मन्थरासंवादः' इति यच्चित्रमानीतं तत् कियत्कालं पर्यङ्कतल एव स्थास्यति? पर्यङ्कतले सम्मार्जनं कर्तुं न शक्यते। धूलिधूसरितं स्थानं, चित्रमपि। जनैश्चित्राणि कक्षभित्तिसंलग्नानि क्रियन्ते। न जाने एतदेवं भविष्यति न वा। किं च, आशंके कदाचिद् बालकेन केनचित् एतस्य काचः शतधा चूर्णो भविष्यति, हस्तपादमपि तस्य व्रणितं संपत्स्यते। न जाने, कथं सर्वकर्मसु भवत एवं शिथिलता।

**योगीन्द्रः**—कियन्ति दिनानि व्यतीतानि? एक एव सप्ताहोऽतिक्रान्तोऽस्ति। ननु छिद्रान्वेषणनिपुणैव भवती!

**मनोरमा**—दिवसगणना तु मया न कृता, किन्तु अधिककालमेवं स्थिते चित्रस्य विनष्टिरवश्यं भाविनी। अतएव उच्यते।

**योगीन्द्रः**—वाढमद्यैव स्वकार्यालयाद् गृहं प्रत्यावृत्य चित्रमदः भित्तिसंलग्नं करिष्यामि। ( पुत्रकन्या उद्दिश्य उच्चैः ) रे बालकबालिकाः! शृणुत, अद्य सार्धचतुर्वादनानन्तरं गृहं प्रत्यावृत्य चित्रं भित्तिविलम्बि करिष्यामि। यूयं सज्जीभूय तिष्ठत।

( परिक्रामन्तावुभावपि निष्क्रान्तौ )

## द्वितीयं दृश्यम्

( योगीन्द्रस्य प्रवेशः। तेन स्वदेहमावर्ज्य पर्यङ्कतलात् चित्रं बहिरानीतम्। तत् चित्रं तस्य हस्ताद् भ्रष्टं भूमौ पतति, चूर्णीभूतश्च काचः )

**योगीन्द्रः**—अहह, काचखण्डाः इतस्ततो विकीर्णाः। ( संगृह्णाति तान् ) हन्त अंगुलिर्मे व्रणिता सञ्जाता। शोणितबिन्दवश्चापि निर्गच्छन्ति। नास्ति कोप्यत्र यो मम क्षते ओषधिप्रयोगं कृत्वा वस्त्रखण्डेन अंगुलिं संवेष्ट्य मह्यं प्राथमिकसाहाय्यं ददाति? ( काष्ठासने उपविशति )।

( मनोरमायाः प्रवेशः )

**मनोरमा**—किमुपन्यस्तम् ? कथं चीत्कारः क्रियते ? ( निर्वर्ण्य ) अहो भवतोऽ-गुल्यां काचखण्डेन क्षतः संजातः। बालकानां कृते एव मम एवमाशंका आसीत्। यद्भवतु, यामि धौतवस्त्रखण्डस्य आनयनार्थम्। ( प्रस्थिता )।

**योगीन्द्रः**—कथं चिरायते ? यदि वस्त्रखण्डं न प्राप्यते, मम करचीरं मम कञ्चु-कस्य कोषमध्ये एव आस्ते, तेनैव मम अंगुलिसंवेष्टनं क्रियताम्, ( अपरहस्तेन अंगुलिं तां परामृश्य ) हा भृशं क्लिष्टोऽस्मि। भो भोः, किं यूयं नेत्रहीनाः ! मम कञ्चुको न दृश्यते युस्माभिः ? ( कन्यकायां प्रविष्टायां तामुद्दिश्य) त्वमपि निश्चेष्टासि ? नावबुध्यते युष्माभिः मम अंगुलिक्षतेन कियान् असह्यः क्लेशः ? ( तस्याः ताड़नार्थं यावत् काष्ठासनादुत्थित-स्तावन्मनोरमायाः प्रवेशः )।

**मनोरमा**—कथं सर्वेभ्यः क्रुध्यति भवान् ? पश्यतु भवान् स्वयमेव कञ्चुकोपरि उपविष्टोऽस्ति।

**योगीन्द्रः**—कथं ज्ञायते मया ? महत्या पीडया क्लिष्टोऽस्मि। अस्तु, ओषधिप्रयोगं कृत्वा करचीरेण अंगुल्यावेष्टनं क्रियताम्। ( मनोरमा तथा करोति )।

**योगीन्द्रः**—( पुनरुपविश्य प्रथमं पुत्रं प्रति ) नारायण, नारायण !

( नारायणस्य प्रवेशः )

**नारायणः**—एषोऽस्मि।

**योगीन्द्रः**—चित्रमेतत् आपणे काचावृतं कारयित्वा आनय।

**नारायणः**—एषोऽहं गच्छामि तात ! ( प्रस्थितः )।

**योगीन्द्रः**—( द्वितीयं पुत्रं प्रति ) माधव, माधव, शीघ्रमागच्छ।

( माधवस्य प्रवेशः )

**योगीन्द्रः**—माधव, चित्रस्य भित्तिगात्रे धारणार्थमस्ति कीलकानामावश्यकता। याहि, आनय तानि।

**माधवः**—गच्छामि त्वरितम्। ( प्रस्थितः )।

**योगीन्द्रः**—( तृतीयपुत्रं प्रति ) यादव, यादव !

( यादवस्य प्रवेशः )

**योगीन्द्रः**—यादव, शीघ्रं याहि। कियत्प्रमाणानि कीलकानि आनेतव्यानि—एतत्तु माधवाय न कथितम्। गच्छ, कथय तमेतावत्प्रमाणानि ( अंगुल्या संकेतं प्रदर्श्य ) आनेत-व्यानि।

**यादवः**—यदाज्ञापयति भवान् ( प्रस्थितः )।

( ततः प्रविशन्ति भ्रातरः काचावृतं चित्रं कीलकानि च गृहीत्वा )।

**नारायणः**—पितः, एतानि सर्वाणि आनीतानि।

**योगीन्द्रः**—एषोऽहं काष्ठमञ्चमारुह्य कीलकं भित्तौ कीलितं करोमि। ( उत्थाय काष्ठमञ्चमारुह्य यदैव तेन भित्तौ कीलकं स्थापयित्वा भीमपराक्रमेण मुद्गरप्रहारः कृतः तदा मुद्गरस्यापि कियदंशो भित्तौ प्रविष्टः )।

**योगीन्द्रः**—अहो, किं दुर्दैवम् । मुद्गर एव भित्तौ प्रविष्टः ! भवतु, निर्गमयामि ( प्रयत्नेन मुद्गरो निर्गतः, किन्तु भित्तेः कियदंशो भग्नः, पतिताश्च 'सीमेण्ट' मिश्रित-वालुकाप्रलेपा इतस्ततः ) ।

**योगीन्द्रः**—( सशिरःकम्पं सोत्साहश्च ) न ह्येतदुपयुक्तं स्थानम् । मञ्चं दूरे नीत्वा कीलकप्रोथनं करोमि । ( तथा कृत्वा ) मञ्चमारुह्य पुनः कीलकनिवेशनाय यावत् प्रयत्नः क्रियते तावत् स्थानभ्रष्टं कीलकं भूमौ पतति ) ।

**योगीन्द्रः**—नारायण, अन्यत् कीलकं देहि, मञ्चे अवस्थाय कीलकप्रोथनं न सुकरम् । पार्श्ववर्त्तिनः उच्चकाष्ठासनादेव एतत् करोमि ( इति यावत् पार्श्ववर्तिकाष्ठासनोपरि पादं प्रसारयति तावत् स सशब्दं भूतले पतति । कक्षतलस्य कम्बलविस्तीर्णत्वात् आघातः स्वल्प एव सञ्जातः । पितुः कर्मपटुतां दृष्ट्वा बालकाः उच्चैः हसन्ति ) ।

**योगीन्द्रः**—( उत्थाय ) अहं भूतले पतितः, यूयं हसथ ? ( ताडयितुमुद्यतः, बालकाः पलायिताः ) ।

**योगीन्द्रः**—( स्वगतम् ) इतोऽपि दूरे गत्वा कीलकं कीलितं करोमि । ( काष्ठासनं दूरे नीत्वा तदारुह्य चित्रं भित्तिविलम्बि कृतम् ) ।

**योगीन्द्रः**—सम्प्रति काष्ठासनमिदं कक्षस्य केन्द्रस्थले आनीय तत्र उपविश्य पश्यामि तावत् । ( काष्ठासनं द्रुतमाकर्षयति, दण्डायमानायाः मनोरमायः चरणो दलितः )

**मनोरमा**—अहह, भृशं पीडितास्मि । दलितो मे चरणो भवता काष्ठासनेन । (गुरुतरकार्यव्यापृतचेतसा योगीन्द्रेण किञ्चिदपि न ज्ञातं, श्रुतं वा ) ।

**योगीन्द्रः**—अहो, रमणीया कक्षस्य शोभा !

( चित्रं भित्तेः एकदेशे एव तिर्यग्रूपेण विलम्बितः । समग्रभित्तिस्तु भूकम्पविध्वस्तेत्येवं प्रतीतिर्जाता ) ।

**योगीन्द्रः**—( स्वगतम् ) न जाने कलात्मकदृष्टिविहीनाः जनाः किं वदिष्यन्ति, किन्तु मम दृष्ट्यां कक्षस्य रमणीया शोभा सञ्जाता ।

**मनोरमा**—आगामिनि काले यदा कदाचिद् भित्तौ चित्रस्थापनं भविष्यति तदाहं पित्रालयं गमिष्यामि । अद्यतनानुभवेन मन्ये त्रिचतुर्दिनानि तत्र यापयित्वा आगमनमेवोचितम् । अत्रान्तरे चित्रनिवेशनरूपमेतत् महत् कार्यं सुसम्पन्नं भविष्यति ।

**योगीन्द्रः**—न जाने कथं भवती मम सर्वकार्येषु दोषमेव पश्यति । दोषदर्शिनः निन्दन्तु वा न निन्दन्तु, एवंविधानां लघुकर्मणामेवं योगयुक्तरूपेण कलात्मकतया सम्यक् सम्पादनं मह्यं भृशं रोचते । अत एव मया जीवनस्य आदर्शवाक्यरूपेण अङ्गीकृतं 'योगः कर्मसु कौशलम्' इति । शृण्वन्तु सर्वे—

नाम्नाहमस्मि योगीन्द्रः कथं योगो न स्यान्मम ।
चित्रनिवेशनेऽप्यत्र दर्शिता योगनिष्ठता ॥ इति ॥

[ यवनिकापातः ]

# आत्मनोऽजरामरत्वम्

श्रीरमेशचन्द्रपाण्डेयः
[ काशीगुरुकुलसंस्कृतमहाविद्यालये व्याकरणविभागाध्यक्षः ]

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥ १६॥
अविनाशि तु तद्विद्धि, येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य, न कश्चित् कर्तुमर्हति॥ १७॥
अन्तवन्त इमे देहाः नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्य, तस्माद् युध्यस्व, भारत॥ १८॥
य एनं वेत्ति हन्तारं, यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो, नायं हन्ति न हन्यते॥ १९॥
न जायते म्रियते वा कदाचिन्
नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे॥ २०॥
वेदाविनाशिनं नित्यं य एनमजमव्ययम्।
कथं स पुरुषः, पार्थ, कं घातयति हन्ति कम्॥ २१॥
वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही॥ २२॥
नैनं छिन्दन्ति शस्त्राणि, नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥ २३॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥ २४॥
अव्यक्तोऽयमचिन्त्योऽयम्, अविकार्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि॥ २५॥

[ श्रीमद्भगवद्गीतायां द्वितीयाध्याये ]

अनवस्थेति यावत् । तत् = तस्मात् आश्रयानिरूपणात्, भिदा दुर्निरूपा = भेदमात्रं निरूपयितुमशक्यम् ॥ ५ ॥

प्रकारान्तरेण भेदखण्डनम्

**भेदोऽयं भिन्नधर्मिप्रतिभटविषयज्ञानजज्ञानवेद्यो,**
**धर्म्यादेर्भेदसिद्धिः पुनरपि च तथेत्यापतेच्चानवस्था ।**
**भेदे धर्म्याद्यभेदे बत भवति मृषा भेदबुद्धिर्विभेदे,**
**प्रादुःष्युः पूर्वदोषा न च गतिरपरा, तेन भेदो मृषैव[1] ॥ ६ ॥**

प्रकारान्तरेण भेदं खण्डयति—**भेदोऽयमिति** । किञ्च, अयं भेदः = सामान्यतः सर्वोऽपि भेदः, भिन्नधर्मिप्रतिभटविषयज्ञानजज्ञानवेद्यः = परस्परभिन्नस्वाश्रयप्रतियोगिविषयकं यज्ज्ञानं तज्जन्यज्ञाने गम्यः, भेदज्ञाने भेदाश्रयप्रतियोगिनोः परस्परभिन्नयोर्ज्ञानस्य कारणत्वात् । न हि पटप्रतियोगिकघटनिष्ठभेदस्य घटपटज्ञानमन्तरा ज्ञानमिति भावः ।

एवं च, धर्म्यादेर्भेदसिद्धिरपि च । पुनस्तथा कारणीभूतज्ञानविषयस्य धर्म्यादेः धर्मिप्रतियोगिनोः परस्परभेदस्य ज्ञानम्, अपि तु तथैव धर्मिप्रतियोगिज्ञानाधीनमेव इति एवमनवस्था च आपतेत्; कारणीभूतज्ञानधाराया अविश्रान्तेः । अथैतद्दोषभिया भेदे = भेदपदार्थे, धर्म्याद्यभेदे अङ्गीकृते, बतेति खेदे, भेदबुद्धिर्मृषा भवति; भेदस्य सर्वाभिन्नत्वेनोच्छेदापत्तेः । एतद्भिया भेदे पदार्थे विभेदे=धर्म्यादिप्रतियोगिकभेदेऽङ्गीकृते, पूर्वदोषाः = आत्माश्रयादयः, प्रादुःष्युः=प्रकटीभवेयुः, अपरा = अन्या च, गतिः = उपपत्तिः, न । तेन हेतुना भेदो मृषैव = मिथ्यैव ॥ ६ ॥

भेदासिद्धौ प्रकारान्तरम्

**द्रव्ये भेदस्य योगो न भवति निरुपाख्यस्य भावस्वरूपो,**
**नाभावोऽन्यः समत्वादनुभयमिलनान्नापि तत्तत्स्वरूपम् ।**
**भावाभावातिरिक्तं न च किमपि तयोरस्ति सम्बन्धरूपम्,**
**निःसम्बन्धेऽपि शुक्तौ रजतमिव मृषा, तेन भेदः प्रतीतः[2] ॥ ७ ॥**

भेदासिद्धौ प्रकारान्तरं दर्शयति—**द्रव्ये** इति । निरुपाख्यस्य = अन्योन्याभावरूपत्वेन किञ्चिद्वस्तुरूपतया वक्तुमशक्यस्य शून्यस्वरूपस्य, भेदस्य, द्रव्ये योगः=कस्मिंश्चिदपि वस्तुनि सम्बन्धः, न भवति = न सम्भवति; यतः योगः भावस्वरूपः, सम्बन्धश्च सम्बन्धिभ्यां भिन्नः सम्बन्धिनिष्ठो भावरूपः, तदाधारता चावस्तुत्वेन भेदेन सम्भवतीति भावः ।

अथ अभावः ? स च सम्बन्धः अभावरूपः, तर्हि अन्यो न = सम्बन्धिभ्यां भिन्नो न; कुतः ? समत्वात् = भेदस्याप्यभावरूपत्वेन एकरूपत्वात् । पुनः, स सम्बन्धः तत्तत्स्वरूपम् अपि न = सम्बन्धिस्वरूपमपि न । कस्मात् ? अनुभयमिलनात् = मिलनस्यैव सम्बन्धपदार्थत्वेन सम्बन्धिस्वरूपयोरुभयोः पृथगवस्थानात् सम्बन्धिभिन्नत्वसम्बन्धिनिष्ठ-

---

१. स्रग्धराच्छन्दः ।

२. स्रग्धराच्छन्दः ।

त्वाभावात्। अथ तयोः भेदभेदाधारयोः भावाभावातिरिक्तम् सम्बन्धरूपं च किमपि नास्ति, उभयविधातिरिक्तस्यासत्त्वात्। तेन हेतुना निःसम्बन्धेऽपि = सम्बन्धाभावेऽपि, प्रतीतः = प्रतीयमानः, भेदः मृषा। किमिव ? शुक्तौ रजतमिव ॥ ७ ॥

भेदे मानाभावः

**संयोगादेरयोगान्न हि भवति भिदा; गोचरश्चेन्द्रियाणाम्,**
**व्याप्तिर्नासङ्गताया न भवति सदृशी वाक्यतात्पर्यदूरा।**
**मानाभावो न मानं न च पुनरपरं मानमस्यां तथापि,**
**प्रत्यक्षा स्वाप्नमायानगरमिव भवेत् साधु सैषा मृषैव**[1] ॥ ८ ॥

प्रत्यक्षादिसिद्धत्वेन प्रामाणिकत्वादभ्युपेय भेदः ? इत्याह—**संयोगादे**रिति। भिदा = भेदः, इन्द्रियाणां गोचरो न भवति; कुतः ? संयोगादेः = सन्निकर्षस्य, अयोगात्। भेदस्यावस्तुत्वादिना सर्वथा सम्बन्धयोग्यताया निरस्तत्वादिति भावः। एवं क्वचिदपि असङ्गतायाः = सम्बन्धिशून्यायाः भिदाया व्याप्तिर्न = यत्र कुत्रापि नास्त्येव। तस्य क्व व्याप्तिर्या गृह्येत ?

पुनः, सा भिदा सदृशी न भवति = विरूपाख्ये भेदे किञ्चित् सादृश्यसम्बन्धो न सम्भवति। उपमितिश्च सादृश्यज्ञानाधीना।

पुनः, भिदा वाक्यतात्पर्यदूरा = अद्वैतरूपवेदतात्पर्यादत्यसम्बद्धा। मानाभावः = मानम् उपलब्धिः, तदभावोऽनुपलब्धिः, मानम् न = मानमेव न भवति; अभावत्वेनावस्तुत्वादिति भावः।

पुनः, अस्याम् = भिदायाम्, अपरञ्च मानम् = अन्यदपि मानम् अर्थापत्त्यादि, न सम्भवति, अनुमानान्तर्गतत्वादेरित्याद्यूह्यम्। प्रत्यक्षानुमानोपमानशब्दानुपलब्धिगोचरता तु क्रमेण निरस्तैव भिदाया इति भावः।

तथापि = प्रमाणाविषयत्वेऽपि, प्रत्यक्षा = सर्वानुभवसिद्धा, सा एषा = भिदा, साधु = सम्यक्, मृषा एव भवेत्। किमिव ? स्वाप्नमायानगरम् इव = स्वप्नप्रकटितनगरम् इव, नटमायाप्रकटितनगरमिव च। इदमेव मिथ्यात्वं नाम यदप्रामाणिकत्वेऽपि प्रतीतिरिति भावः ॥ ८ ॥

भेदस्य द्वित्वादिरूपनिरसनम्

**बाह्योऽर्थो**[2] **बुद्धिमात्रान्न भवति स भवन् गोचरः स्यात् परेषाम्,**
**एकैकं न द्वयं चेदुभयमिति मृषा तद्विशिष्टप्रथा च।**
**द्वित्वादेः सङ्करः स्यान्न खलु भवति ते प्रागभावाद् व्यवस्था,**
**नापेक्षाबुद्धिक्लृप्तिः सकलमपि शनैर्योज्यमेतत् पृथक्त्वे**[3] ॥ ९ ॥

द्वित्वादिरूपभेदनिरासायाह—**बाह्य** इति। बाह्योऽर्थः = बहिर्भूतः बुद्धेः बहिर्भूतलादिप्रदेशे जातः सत्यपदार्थः, बुद्धिमात्रात् = केवलबुद्धिनिमित्तात्, न भवति = नोत्पद्यते। द्वित्वं तु बहिर्भूतघटद्वयादिप्रदेशे 'अयमेकः' 'अयमेकः' इत्यपेक्षाबुद्ध्योत्पद्यते; अनन्तरम्

१. स्रग्धराच्छन्दः।

२. बाह्योऽर्थो—मु० पा०।

३. स्रग्धराच्छन्दः।

'इमौ द्वौ घटौ' इति प्रतीतेरिति स्वीक्रियते भेदवादिभिः। तथा च मेघेषु बुद्धिकल्पित-नगरवन्मिथ्यैव स्यादिति भावः।

किञ्च, त्वन्मते बुद्धिजः सः = द्वित्वादिपदार्थः, भवन् = उत्पन्नः सन्, परेषां गोचरः स्यात् = पुरुषान्तरगम्यः स्यात्, सत्यबाह्यघटादिवत्, न तु तथा भवतीति कल्पकैकगोचरत्वेन तद्बुद्धिमात्रवृत्तिस्वाप्नवन्मिथ्यैव।

किञ्च, एकैकं चेत् न द्वयम्; एकैकवस्तुनि द्वित्वाप्रतीतेः। एकमेकं घटादिवस्तु यदि द्वित्वशून्यम्, तर्हि उभयम् = घटादियुग्मम् द्वित्वविशिष्टम् इति, मृषा = घटद्वये द्वित्वप्रतीतिर्मिथ्या; घटयोर्द्वित्वाभावस्यापि सत्त्वात्, तदभाववति तत्प्रकारकबोधस्याप्रमात्वात्। तद्विशिष्टप्रथा च मृषा = द्वित्वविशिष्टघटादिज्ञानं चाप्रमा।

किञ्च, द्वित्वादेः = द्वित्वत्रित्वादेः, सङ्करः स्यात् = बहूनां समानाश्रयकत्वरूपः। ते = तव, खलु = निश्चयेन, प्रागभावात् = हेतोः, व्यवस्था न भवति, सर्वत्र द्वित्वादिप्रतीतेरत्रैव द्वित्वादिप्रागभाव इत्यनिश्चयादिति भावः।

अपेक्षाबुद्ध्याऽपि न व्यवस्था स्यात्; यतः अपेक्षाबुद्धिक्लृप्तिर्न = 'अत्रेदृश्यपेक्षाबुद्धिर्हेतुः' इति अपेक्षाबुद्धेः निश्चयो नास्ति; 'अयमेकः' 'अयमेकः' इत्यपेक्षया, 'इमौ द्वौ, अयमेकः' इत्यपेक्षया च त्रित्वप्रतीतेः।

एतत् सकलम् = पूर्वोक्तसर्वदूषणम्, पृथक्त्वेऽपि = पृथक्त्वरूपभेदेऽपि, शनैर्योज्यम् = क्रमशो योजनीयम्; सङ्ख्यावत्पृथक्त्वस्याप्यपेक्षाबुद्धिजन्यत्वेन तुल्यत्वादिति भावः॥ ९॥

उपादानकारणरूपाधिकरणस्वरूप एव भेदः

**कार्यं नान्यन्निदानात् पृथगनधिगमान्न ह्युपादानहेत्वो-**
**र्वैलक्षण्यं तथात्वे न भवति समवायाद् व्यवस्थानुपेतात्।**
**नो चेत् स्वर्णादिकार्ये द्विगुणगुरुतया मूल्यवृद्धिप्रसङ्गो-**
**ऽवस्थाभेदाद् विभेदे स्थितिगतिभिदया भेदिनः स्युर्नराश्च[1]॥ १०॥**

तत्तत्कार्याणामुपादानकारणरूपाधिकरणस्वरूप एव भेद इत्यत्राह—कार्यमिति। कार्यम् निदानात् = उपादानकारणात्, अन्यत् न = स्वरूपतोऽपि भिन्नं न;। कुतः? पृथगनधिगमात् = उपादानात् पृथक्कृत्य कार्यस्य दर्शयितुमशक्यत्वात्। तथात्वे = कार्यस्यान्यत्वे, हि = यस्मात्, उपादानहेत्वोः वैलक्षण्यम् न = विशेषो न स्यात्। स्वानतिरिक्तातिरिक्तकार्योत्पादकत्वमेव हि वैलक्षण्यम्। समवायो हेतूपादानभेदको भवेदित्यत्राह—अनुपेतात् = अस्वीकृतात्, समवायाद् हेतूपादानव्यवस्था न भवति। समवायाभ्युपगमे हि सम्बन्धिभिन्नसमवायश्च सम्बन्धिनौ समवायेनैवाश्रयेत्। स चात्माश्रयभियाऽन्य एव समवायः। एष च समवायत्वाविशेषात् समवायेनैव स्वसम्बन्धिनावाश्रयेत्, स चापर एवान्योन्याश्रयभियेत्यनवस्थान्तो दोषः।

नो चेत् = कार्यं कारणरूपं चेत्, नो तर्हि, स्वर्णादिकार्ये = कटकादौ, मूल्यवृद्धिप्रसङ्गः = कारणमूल्यात् द्विगुणं कार्यमूल्यं स्यात्। कया? द्विगुणगुरुतया =

१. स्रग्धराच्छन्दः।

कारणगुरुत्वेनातिरिक्तकार्यद्रव्ये स्वसदृशगुरुत्वान्तरोत्पत्त्या कारणात् कार्यपरिमाणस्य द्वैगुण्यापत्त्या।

अथ अवस्थाभेदात् = कार्यकारणात्यन्ताभेदेऽपि कटककुण्डलादिरूपावस्था-परिणामभेदात्, विभेदे = कनकस्वरूपभेदे स्वीकृते, स्थितिगतिभिदया = गतिनिवृत्ति-गमनादिरूपावस्थाभेदेन, नराश्च = नरा अपि, भेदिनः = भेदवन्तः स्युः। तथा च प्रत्य-वस्थं देवदत्तस्य भेदेन जनन-मरणहेतुकक्रियाप्रसङ्गः स्यात् ॥ १० ॥

कार्यकारणभेदप्रत्ययस्य मायिकत्वम्

**पिण्डावस्था घटत्वे मनसि विमृशतो हेतुकार्यत्वधीः स्या-**
**न्मृन्मात्रं यद्वदेकं स्फुटमभिमृशतो नैव हेतुर्न कार्यम्।**
**तद्वन्मायिप्रपञ्चौ मनसि कलयतो ब्रह्म विश्वस्य हेतुः,**
**सन्मात्रं त्वेकरूपं पटु परिमृशतो नैव मायी न विश्वम्[1] ॥ ११ ॥**

कार्यकारणभेदप्रत्ययो मायिकः, न वस्तुदृष्ट्येत्याह—**पिण्डावस्थेति**। पिण्डावस्था घटत्वे = मृदः इमे द्वे अवस्थे, मनसि विमृशतः = भेदेन भावयतः पुरुषस्य, हेतुकार्यत्वधीः स्यात् = कार्यकारणभावरूपभेदबुद्धिः स्यात्। उक्तावस्थयोः एकम् = मृन्मात्रम्, स्फुटम् = अभिव्यक्तम्, अभिमृशतः पुरुषस्य यद्वत् = यथा नैव हेतुः न कार्यम् = कार्यकारणभेदो न, तद्वत् = तथा, मायिप्रपञ्चौ = ईश्वरब्रह्माण्डौ, मनसि कलयतः = पृथग्भावयतः, विश्वस्य हेतुः ब्रह्म, कार्यकारणभेद इति यावत्। सन्मात्रम् एकरूपम् = मायिप्रपञ्चयोः एकसद्-रूपम्, पटु = दृढम्, परिमृशतः, नैव मायी न विश्वम्। नैव भेद[2] इति भावः ॥ ११ ॥

जगतो मिथ्यात्वेऽपि सत्यतया प्रतीतिः कथम् ?

**सन् कुम्भः सत् कुसूलं सदखिलमिति यद् भाति यच्च श्रुतं प्राक्,**
**तत् सत्यं व्याप्य विश्वं घटपिठरमुखं मृत्तिकेवावभाति।**
**तस्मिन् रज्ज्वाविवाहिर्निखिलमपि जगत् कल्पितं तत् स्वभावात्,**
**तन्मात्रं तत्पृथक्त्वे ह्यसदिदमखिलं स्यात् तदेव ह्यभेदे[3] ॥ १२ ॥**

मिथ्यात्वे सत्यतया कथं प्रतीयते जगत् ? इत्यत्राह—**सन् कुम्भ** इति। कुम्भः सन् = सत्यः, कुसूलम् = धान्यपात्रम्, सत्, अखिलम् = सर्वम्, सत्, इति = एवम्, एक-रूपेण यत् = सत्यम् भाति। च = पुनः, यत् प्राक् सृष्टेः = पुरा, श्रुतम् = श्रुतिषु निरूपितम्, तत् सत्यम् विश्वं व्याप्य अवभाति। केव ? घटपिठरमुखम् मृत्तिका इव = स्वकार्यानुगता सती घटस्थाल्यादिकं व्याप्य मृत्तिका यथाऽवभाति, रज्जौ अहिः इव। तस्मिन् = सद्रूप-ब्रह्मणि, निखिलमपि जगत् कल्पितम्, अतः तत्स्वभावात् = अधिष्ठानरूपत्वात्, तन्मात्रम् = ब्रह्मैव, तत्पृथक्त्वे हि = सतः अन्यत्वे तु, अखिलमिदम् = जगत्, असत् स्यात्; सद्भिन्नस्य गत्यन्तराभावात्। अभेदे हि सद्रूपत्वे तु तदेव = ब्रह्मैव ॥ १२ ॥

---

१. स्रग्धराच्छन्दः।

२. नैष भेद—मु० पा०।

३. स्रग्धराच्छन्दः।

**एकैव ब्रह्मसत्ता व्यवहृतिविषये शुक्तिरूप्यादिके च,**
**ख्यान्त्याद्ये सत्यमेतज्जगदिति धियमा ब्रह्मबोधात् विधत्ते ।**
**यावत्स्फूर्ति द्वितीये प्रथितमिव पटस्फाटिके रक्तरूपम्,**
**माञ्जिष्ठं साधु रक्तः पट इति न मृषा, स्फाटिके तन्मृषेति[1] ॥ १३ ॥**

सर्वस्य सद्रूपत्वे शुक्तिरजतान्यरजतयोर्बाधाबाधौ कथम् ? अत आह— **एकेति** । व्यवहृतिविषये = क्रयविक्रयादिव्यवहारास्पदे रजतादौ, शुक्तिरूप्यादिके च = शुक्तौ भात-रजतादौ च ख्यान्ती = भासमाना, ब्रह्मसत्ता एकैव । तथापि आद्ये = व्यवहृतिविषये, आब्रह्मबोधात् = ब्रह्मसाक्षात्कारपर्यन्तम्, 'एतज्जगत् सत्यम्' इति धियं विधत्ते = इति प्रतीतिं जनयति ।

द्वितीये = शुक्तिरजतादौ, यावत्स्फूर्ति = 'इदं रजतम्' इति प्रतीतिपर्यन्तमेव 'एतत् सत्यम्' इति धियं विधत्ते । 'नेदं रजतम्' इति बाधकस्याशु प्रवृत्तेरिति भावः । किमिव ? पटस्फाटिके प्रथितम् = वस्त्रे स्फटिककार्यकुण्डिकादौ च, प्रतीतम्, माञ्जिष्ठम् = मञ्जिष्ठसम्बन्धिरक्तरूपम् इव । कथम् ? वस्तुतो रक्तरूपस्य मञ्जिष्ठावयवस्थ-त्वेऽपि पटे 'रक्तः पटः' इति ज्ञानं न मृषा, किन्तु साधु = सत्यम् । स्फाटिके तत् 'रक्तः, स्फाटिकः' इति ज्ञानम्, मृषा इति = इत्थम् ॥ १३ ॥

ब्रह्मणः कल्पितांशादिस्वीकारे न काचिद्धानिः

**सच्चित्सौख्यैकरस्येऽप्यनृतजड़महादुःखमोहान्यभावात्,**
**सत्यज्ञानादिवाक्यव्यवहृतिविषये कल्पिते रूपभेदे ।**
**शुक्तीदन्तेव सत्ता स्फुरति समरसा कल्पितेनानुविद्धा,**
**शुक्तित्वादीव मायावरणपरिभवाच्चित्सुखत्वे न भातः[2] ॥ १४ ॥**

ननु ब्रह्म सन्मात्रं चेत् ? सामान्यविशेषांशद्वयवत एवाधिष्ठानत्वात् नैकरसं ब्रह्मा-धिष्ठानम्; तथा सर्वेषां सुखार्थित्वान्न कोऽपि ब्रह्मार्थी स्यात् ! सच्चिदानन्दात्मकत्वे तु ऐकरस्यनिरवयवत्वादिहानिः ? अत आह—**सदिति** ।

सच्चित्सौख्यैकरस्येऽपि = रसः आत्मा, सच्चिदानन्दानाम् एकात्मकत्वेऽपि सत्य-ज्ञानादिवाक्यव्यवहृतिविषये रूपभेदे कल्पिते 'सत्यं ज्ञानमनन्तं ब्रह्म' (      ) इत्यादि-वाक्येन बोध्य-बोधनरूपव्यवहारविषये सत्यत्व-ज्ञानत्व-आनन्दत्वरूपभेदे, कल्पिते सति = कल्पनायां हेतुः । कस्मात् ? अनृतजड़महादुःखमोहान्यभावात् = मिथ्यादिरूपमोहादज्ञानात् अन्यत्वात्, अन्यस्वभावत्वात् । आत्मनः सत्यत्वाद्यनेकांशरूपभेदकल्पनं तु ब्रह्मणि मिथ्या-त्वादिनिराकरणायैव श्रुत्यादिभिरिति भावः ।

इत्थमंशे कल्पिते सत्ता, सत्तांशस्तु कल्पितेन = जगत्पदार्थेन, अनुविद्धा = व्याप्ता, कल्पितेन समरसा = तुल्यरूपा सती स्फुरति । का इव ? शुक्तीदन्ता इव = यथा शुक्ति-गतेदमंशः रजतेन व्याप्तः रजतरूपः सन् 'इदं रजतम्' इति स्फुरति । तथा सज्जगदिति च चित्सुखत्वे चित्त्वमानन्दत्वं च न भातः । कस्मात् ? मायावरणपरिभवात् = मायया

---

१. स्रग्धराच्छन्दः ।		२. स्रग्धराच्छन्दः ।

वृतत्वात् । किमिव ? शुक्तित्वादि इव । अज्ञानावृतं शुक्तित्वत्रिकोणत्वादिकं यथा न भाति, तद्वत् कल्पितांशादिस्वीकारे न काचिद्धानिः, सकलेष्टसिद्धिश्चेति भावः ॥ १४ ॥

अधिष्ठानं ब्रह्मेत्यत्र दृष्टान्तः

**पृष्टे कोऽस्मिन् समाजे नरपतिरिति यो मत्तमातङ्गपृष्ठे,**
**मुक्ताजालान्तराले शशिधवललसच्छत्रमूले स्फुरन् सः ।**
**इत्युक्तः पुंविशेषं सपदि परिचिनोत्येष राजेति सर्वम्,**
**मुक्त्वैकं येन पश्यन्नमुमपरविधं सैष राजेति वेति**[1] ॥ १५ ॥

तटस्थलक्षणेन सृष्टिश्रुतयोऽधिष्ठानं ब्रह्म बोधयन्तीत्यत्र दृष्टान्तमाह—**पृष्टे** इति । 'अस्मिन् समाजे नरपतिः = राजा, कः ?' इति पृष्टे = पृच्छ्यमाने सति, 'मत्तगजपृष्ठे मुक्ताजालान्तराले = मुक्तामयचतुरस्रगजपृष्ठावलम्बिजालमध्ये शशिधवललसच्छत्रमूले = चन्द्रवत् स्वच्छशोभायमानच्छत्रस्य मूलदेशे, स्फुरन् = असाधारणवासोभूषादिभिर्दीप्यमानः यः स = राजा' इत्युक्तः = प्रश्नकर्ता, सर्वम् = विशेषणं त्यक्त्वा एकं विशेषम् = पुरुषविशेषम् 'एषोऽयम् राजा' इति सपदि = तत्कालमेव परिचिनोति = जानाति, न तु विशेषणसहितम् । येन हेतुना कालान्तरेऽपरविधम् उक्तसर्वलक्षणान्यलक्षणयुतम् अमुम् राजानं पश्यन् 'स एव यः पूर्वं दृष्टः, स एवायं राजा' इति जानाति ॥ १५ ॥

दृष्टान्तस्य दार्ष्टान्तिके योजनम्

**वर्णिता विविदिषादियन्त्रणात्, पुंविशेषमिव लक्षणोक्तयः ।**
**विश्वसर्गविषयागमाः परम्, लक्षयन्ति निरवद्यचिद्घनम्**[2] ॥ १६ ॥

दृष्टान्तं दार्ष्टान्तिके योजयति—**वर्णिता** इति । विविदिषादियन्त्रणात् = श्रोतृजिज्ञासा-वक्तृतात्पर्यानुरोधात् हेतोः वर्णिताः लक्षणोक्तयः=पूर्वपद्योक्तराजलक्षणवाक्यानि, पुंविशेषमिव = श्रोतुर्जिज्ञासा वक्तुश्च तात्पर्यं न विशेषणेष्विति केवलपुरुष-व्यक्तिविशेषमेव यथा लक्षयन्ति, तद्वत् विश्वसर्गविषयागमाः = जगदुत्पत्तिविषयकवेदवाक्यानि निरवद्यचिद्घनम् = मायातत्कार्यदोषरहितचिन्मूर्तिम्, परम् = ब्रह्म, लक्षयन्ति ॥ १६ ॥

सृष्टिवाक्यानां निर्विशेषलक्षणकत्वनिरूपणम्

**तत्त्वमर्थवदत्र यद्यपि नान्वयानुपपत्तिधी-**
**र्नाप्यभिन्नपदार्थकत्वमतः पदेषु न लक्षणा ।**
**भेदसङ्गतिकानि तानि समेत्य सत्यचिदद्वयं**
**तत्पराणि हि लक्षयेयुरुपक्रमाद्यनुसारतः**[3] ॥ १७ ॥

सृष्टिवाक्यानां निर्विशेषलक्षणकत्वं निरूपयति—**तत्त्वमिति** । यद्यपि तत्वमर्थवत् = 'तत्त्वमसि' इति महावाक्यस्थतत्त्वम्पदार्थयोरिव, अत्र = सृष्टिवाक्येषु 'यतो वा इमानि' (     ) इत्यादिवाक्येषु, अन्वयानुपपत्तिधीः = लक्षणाबीजम्, नास्ति । तथा

---

१. स्रग्धराच्छन्दः ।

२. रथोद्धताच्छन्दः ।

३. विबुधप्रियाच्छन्दः ।

'तत्त्वमसि' आदिवाक्यवत् सृष्टिवाक्यानाम् अभिन्नपदार्थकत्वमपि नास्ति = पदार्थाभेदोद्बोधकसमानविभक्तिमत्त्वादि नास्ति, अतः हेतोः पदेषु लक्षणा न। तथापि भेदसङ्गतिकानि = भेदसम्बन्धेन परस्परान्वितानि सृष्टिवाक्यानि समेत्य = अभिन्ननिमित्तोपादानरूपैककारणार्थप्रतिपादनेन एकवाक्यतां प्राप्य, सत्यचिद्रूपम् अद्वयम् = अखण्डम् ब्रह्म लक्षयेयुः, हि = यतः उपक्रमाद्यनुसारतः = उपक्रमोपसंहारादिषड्विधलिङ्गानुरोधात्[1] उक्तविधब्रह्मपराणि तानि। तथा च वाक्ये लक्षणा सम्भवत्येव। १७॥

सृष्टिवाक्यानां ब्रह्माद्वयत्वबोधनोपायता

**अक्षजादिबहिःप्रमाणसमेधितद्वयविभ्रमे,**
**जाग्रति श्रुतिरद्वयप्रतिबोधने सहसाऽक्षमा।**
**व्यावहारिकवस्तुजातमिदं मृषेति विवक्षया,**
**प्रक्रियां रचयाम्बभूव विसृष्टिसंहृतिलक्षणाम्[2] ॥ १८ ॥**

एवं च किमिति सृष्टिवाक्यानि भूयोभूयः कीर्तयन्ति सृष्ट्यादीनेव ? तत्राह—**अक्षजादीति**। प्रत्यक्षादिबाह्यविषयकप्रमाणैः सम्यग्वर्धितद्वैतभ्रमे, जाग्रति = सत्यतया सर्वबुद्धौ सति, सहसा = झटिति अद्वैतबोधने, अक्षमा = असमर्था सती, श्रुतिः, उत्पत्तिप्रलयरूपां प्रक्रियां निर्मितवती।

कया ? 'इदं व्यावहारिकं वस्तुसमूहम् मिथ्या' इति विवक्षया = इति वक्तुमिच्छया इति तात्पर्येण, तथा च नित्यत्वबोधनेन जगतो ब्रह्माद्वयत्वबोधनोपायतयोत्पत्त्यादि कीर्तयन्ति श्रुतय इति भावः ॥ १८ ॥

ब्रह्मवल्लीश्रुतीनामद्वयबोधकत्वम्

**ब्रह्म सच्चिदनन्तमेकमशेषवाङ्मनसातिगम्,**
**पञ्चकोशगुहान्तरं च निगद्य शश्वदलौकिकम्।**
**तद् विसृज्य विवेश सत्यमसत्यमित्युभयं,**
**स्वतः सत्यमित्यभिधायिनी श्रुतिरद्वयं स्फुटमभ्यधात्[3] ॥ १९ ॥**

अथ ब्रह्मवल्लीश्रुतीनामद्वयबोधकत्वमाह—ब्रह्मेति। उपक्रमे सच्चिदनन्तम् ब्रह्म निगद्य, अन्ते च एकम् अशेषवाङ्मनसातिगम्=सर्वलौकिक-वैदिक-वचांसि सर्वप्राणिमनांसि चातिक्रम्य स्थितम्, तद् = अगोचरं ब्रह्म निगद्य, मध्ये च पञ्चकोशगुहान्तरं ब्रह्म शश्वत् निगद्य, पञ्चकोशरूपगुहानाम् प्रत्येकमध्यस्थम् सर्वकोशाधिष्ठानं चाभ्यासेनोक्त्वा अलौकिकम् = लोकेन न विदितम्, केवलमुपनिषद्गम्यम् निगद्य, तद् ब्रह्म सत्यमसत्यम् = सत्यमिथ्यारूपकं जगत्, विसृज्य = उत्पाद्य—इत्युभयम् = उक्तोभयात्मकम्, विवेश = सत्ताप्रदत्वेन व्याप। तथा च—जगदधिष्ठानब्रह्मसत्यतया सदिति भावः।

---

१. "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।"
इति षड्विधानि लिङ्गानि।

२. विबुधप्रियाच्छन्दः।

३. विबुधप्रियाच्छन्दः।

'ब्रह्म तु स्वतः सत्यम्' इत्यभिधायिनी = कथनशीला, श्रुतिः = ब्रह्मवल्ली, व्यक्तम् अद्वैतम् अवोचत्—इत्युपक्रमादिलिङ्गैर्निर्णीतमिति भावः ॥ १९ ॥

सृष्टिवाक्यानामद्वय एव तात्पर्यम्

**ब्रह्मवित् परमेति तत् खलु सच्चिदद्वयलक्षणं वेदनं च गुहान्तरस्य निजस्वरूपतदाप्तये ।**
**इत्युदीर्य सदद्वयत्वसमर्थनाय समाददे विश्वसृष्टिमिमां श्रुतिर्नहि तत्समर्थनमन्यथा[1] ॥२०॥**

सृष्टिवाक्यानामद्वये तात्पर्यं प्रकारान्तरेणाह—**ब्रह्मविदिति** । ब्रह्मवित् = ब्रह्मज्ञानी, परम् = मोक्षम्, प्राप्नोति, तत् खलु = ब्रह्म तु, नित्य-चेतन-द्वैतशून्यरूपम्, वेदनम् च = ज्ञानं तु, साक्षितया बुद्धि गुहान्तर्गतस्य प्रत्यगात्मनः निजरूपब्रह्म-प्राप्त्यर्थम्, इत्युक्त्वा श्रुतिः स्वोक्तसत्यत्वाद्वयत्वयोः निरूपणाय इमां जगदुत्पत्तिप्रक्रियाम्, समाददे = उवाच, हि = यतः अन्यथा = प्रकारान्तरेण निरपेक्षसत्यत्वादि समर्थनं न सम्भवति ॥ २० ॥

ऋग्वेदोपनिषदोऽपि ब्रह्मण्येव तात्पर्यम्

**एक एव पुरा बभूव न चापरं स किलाखिलं,**
**वीक्ष्य विश्वमिदं ससर्ज तनुं प्रविश्य निरीक्षते ।**
**स्वप्नमावसथत्रयं स विचारतः प्रतिबुद्धवान्,**
**स्वात्मनैव समस्तकाममवाप्नुवन्नमृतोऽभवत्[2] ॥ २१ ॥**

एवमृग्वेदोपनिषत्तात्पर्यमपि ब्रह्मण्येवेति दर्शयति—**एक** इति । सृष्टेः पूर्वम् एक आत्मैव आसीत् । अन्यत्तु न स किल = स वै आत्मा सर्वं जगत् वीक्ष्य = एवं कार्यमिति माययाऽनुसन्धाय इदं विश्वं ससर्ज । ततः प्रत्यगात्मना शरीरं प्रविश्य नेत्र-कण्ठ-हृदय-रूपस्थानत्रयम् । अवस्थात्रयमिति यावत् । एतदेव स्वप्नः । मिथ्यात्वात् तं पश्यति । सः= शरीरोपाधिकः आत्मा दैवाद् गुरूपदिष्टविचारेण प्रतिबुद्धवान् सन् = चिन्मात्रात्मस्वरूप-प्रतिबोधरूपजाग्रदवस्थां प्राप्तः सन्, क्षुद्रानन्दानां तत्रैवान्तर्भावात् स्वस्वरूपेणैव सर्वकामान् प्राप्नुवन् निवृत्तान्यवासनस्सन्, अमृतः = मरणरहितः अभवत्—एवं वदन्ती श्रुतिरपि व्यक्तं ब्रह्मण्येव तात्पर्यवतीति भावः ॥ २१ ॥

यजुर्वेदोपनिषदोऽपि तत्रैव समन्वयः

**स्थूल-सूक्ष्मविभागि मूर्तममूर्तमित्यखिलं जगत्,**
**ब्रह्मणो द्विविधं हि रूपमिति प्रकल्प्य विभागतः ।**
**आदिशन्त्यथ नेति नेति निषिध्य रूपमशेषतः,**
**काण्ववाजसनेयकश्रुतिरप्यशेषयदद्वयम्[3] ॥ २२ ॥**

यजुर्वेदोपनिषदोऽप्यत्रैव समन्वयं दर्शयति—**स्थूलेति** । पृथिव्यादित्रयं स्थूलं मूर्तम्, वाय्वाकाशद्वयं सूक्ष्ममर्मूतम् । तथाच—काण्व-माध्यन्दिनशाखाद्वयश्रुतिरपि मूर्तम् अमूर्तम्

---

१. विबुधप्रियाच्छन्दः ।

२. विबुधप्रियाच्छन्दः ।

३. विबुधप्रियाच्छन्दः ।

इति = स्थूलसूक्ष्मविभागयुतम् सर्वं जगत् ब्रह्मणो हि द्विविधं रूपम्, विभागतः = मूर्तामूर्तादिविभागेन, इति प्रकल्प्य = अध्यारोप्य, अथ = अनन्तरम्, 'इति न' 'इति न' इत्येवम् अशेषतः = साकल्येन द्विविधं रूपम् निषिध्य = अपोह्य, शिष्टमधिष्ठानम् चिन्मात्रम् आदिशन्ती = उपदिशन्ती, अद्वयमेव, अशेषयत् = परिशिष्टमकरोत् ॥ २२ ॥

सामवेदोपनिषदापि तस्यैव समर्थनम्

**यत्प्रबोधवशादशेषमिदं जगद् विदितं भवेत्,**
**तद्विवक्तुमुपक्रमोऽत्र सदेव सोम्यगिरा ततः।**
**सृष्टिरीक्षणपूर्विका जगतस्तदैक्यविवक्षया**
**मृत्तिकादिनिदर्शनानि तथाहि सङ्गतिमाप्नुयुः[1] ॥ २३ ॥**

एवं सामवेदोपनिषद्गतिं दर्शयति—**यदिति**। यस्य ज्ञानात् सर्वमिदं जगज्ज्ञातं स्यात्, तदेव वक्तुम् अत्रोपनिषदि 'सदेव सोम्येदमग्र आसीत्' ( ), 'एकमेवाद्वितीयम्' ( ) इति गिरा यस्मात् उपक्रमः, ततः = तस्माद्धेतोः, ज्ञानपूर्वकजगदुत्पत्तिरपि उक्तगिरा प्रतिज्ञातैकत्वविवक्षयैव उक्तोपनिषदुक्तमृत्पिण्डादिदृष्टान्ताश्च तेनैव प्रकारेण सङ्गतिम् = दार्ष्टान्तिकेन समन्वयं प्राप्नुयुः ॥ २३ ॥

प्रकारान्तरेणापि सृष्टिवाक्यानां ब्रह्मणि तात्पर्यबोधनम्

**सत्प्रसूतमिदं सति स्थितमस्तमेति सति स्वतः,**
**सत्तया परिहीणमित्यखिलं सदेव पृथङ् मृषा।**
**कल्पितं हि पृथक् न सन्मृगतृष्णिकोदकवन्मरो-**
**स्तत् सदद्वयमेव वस्त्विति सृष्टिवाक्यसमीहितम्[2] ॥ २४ ॥**

सामवेदोपनिषद्युक्ततात्पर्यश्रुत्युपरितनग्रन्थपर्यालोचनयापि सृष्टिवाक्यानामिदमेव तात्पर्यमित्याह—**सत्प्रसूतमिति**। इदं = जगत्, सद्रूपब्रह्मणः एवोत्पन्नम्, पुनः सत्येऽवस्थितम्, सत्ये चैव[3] लयं याति, अतः स्वतः सत्तया परिहीणम् = कारणसत्तातिरिक्तनिजसत्तारहितम्, इति हेतोः, सर्वम् कारणस्वरूपमेव कारणीभूतसतः पृथक् तु मृषा इति ह्युत्तरग्रन्थे उक्तम्। कल्पितं तु पृथक् न भवति। यथा मरोः सूर्यसन्तप्तनिरुदकप्रान्तरभूमितः मृगतृष्णाजलं न पृथग् भवति तद्वत्, तत् = तस्मात् कारणात्, 'तद्वस्तु अद्वयमेव' इति सृष्टिवाक्यतात्पर्यम् ॥ २४ ॥

आथर्वणसृष्टिवाक्यानामपि तथात्वम्

**विद्यया परयाऽधिगम्यमुदीर्य धर्मविवर्जितं,**
**सुक्ष्ममक्षरतस्ततः प्रभवत्यशेषजगन्मृषा।**
**तद्धि सत्यमिति स्फुटं परिशेष्य वेदनमात्रतः**
**तत् स्वयं भवतीति नित्यमवाप्तमाह तुरीयगीः[4] ॥ २५ ॥**

---

१. विबुधप्रियाच्छन्दः।

२. विबुधप्रियाच्छन्दः।

३. सत्ये—मुद्रितः पाठः।　　　४. विबुधप्रियाच्छन्दः।

आथर्वणसृष्टिवाक्यान्यप्येवमेवेत्याह—**विद्ययेति**। सर्वधर्मरहितम्, सर्वसूक्ष्मादपि सूक्ष्मम् परविद्यया ज्ञेयम्, आथर्वणोपनिषदुपक्रमे उदीर्य = उक्त्वा, निर्विकारात्, ततः = ज्ञेयाद् ब्रह्मणः, अशेषजगत् जायते, तच्च मृषेति पृथिव्योषध्यादिदृष्टान्तेनोक्तम्। तद्धि = 'तदेव सत्यं ज्ञेयं ब्रह्मैव सद्' इति तत उक्तम्। ततः सर्वापवादेन स्फुटं यथा स्यात् तथा ब्रह्ममात्रम् परिशेष्य = अधिष्ठानतया निरूप्य, केवलाज्ञानादेव कण्ठगतचामीकरवदप्राप्तमिव भवति, अतः ज्ञानमात्रात् स्वयं तद् ब्रह्म भवति वेत्ता इति रीत्या सदाप्राप्तमेव, स्वरूपभूतमेव ब्रह्म, तुरीयगीः = चतुर्थवेदः, आह = उक्तवान्। अतो द्वैततात्पर्यवानेवेति भावः ॥ २५ ॥

माण्डूक्योपनिषदोऽपि तत्रैव पर्यवसानम्

**भूतभाविभवज्जगत् परमं च सत् प्रणवात्मकं**
**पादशः प्रविभज्य निह्नुतवाच्यवाचकभेदकम्।**
**पूर्वपूर्वमथोत्तरत्र विलाप्य तुर्यप्रलक्षणं**
**स्वात्मरूपमथर्वणः श्रुतिरभ्यधाच्छिवमद्वयम्[1] ॥ २६ ॥**

माण्डूक्यतात्पर्यमाह—**भूतेति**। भूत-भविष्यद्-वर्तमानकालिकं जगत् उत्कृष्टं सद्रूपं कारणं च त्यक्तवाच्यवाचकभेदं यथा स्यात् तथा ओङ्काररूपम् इत्युक्त्वा, सजगदात्मस्वरूपं प्रणवात्मकं चतुर्भिः पादैः पृथक् कृत्वा, अथ = अनन्तरम्, पूर्वं पूर्वम् पादमुत्तरोत्तरपादे लीनं कृत्वा एकीकृत्य तुर्यम् = चतुर्थं पादम्, लक्षणहीनं द्वैतहीनं परमानन्दरूपम् स्वात्मनः परमार्थरूपम्, अथर्वणः श्रुतिः अभ्यधात् = अवोचत्।

पादविभागस्तु—विश्ववैश्वानररूपाकारः प्रथमः, तैजसहिरण्यगर्भरूपोकारो द्वितीयः, प्राज्ञाव्याकृतरूपमकारस्तृतीयः, शुद्धचिद्रूपाऽर्धमात्रा चतुर्थ इति ॥ २६ ॥

ग्रन्थोक्ततटस्थलक्षणफलम्

**इत्थमेव ततस्ततः श्रुतसृष्टिवाक्यकदम्बकम्**
**प्रक्रियाद्यभिशीलनेन सदद्वयेन समानयेत्।**
**युक्तिभिः श्रुतिभिश्च सैष तटस्थलक्षणसंग्रहः,**
**तत्फले खलु लक्ष्यसत्त्वपरिच्छिदात्रयवारणे ॥[2] २७ ॥**

श्रुत्यन्तरेषु निर्णयमतिदिशन् एतावद्ग्रन्थोक्ततटस्थलक्षणफलमाह—**इत्थमेवेति**। उक्तरीत्यैव तत्र तत्र वेदान्ते श्रुतम् = सृष्टिवाक्यसमूहम्, प्रकरणरूपोपक्रमादिविचारेण पूर्वाचार्योक्तयुक्तिभिः श्रुत्यन्तरैश्च सद्रूपाद्वैतेन तात्पर्यतो योजयेत्। सः = पूर्वोक्तः, तटस्थलक्षणसंग्रहः एषः = एतावान्। तटस्थलक्षणफले तु लक्ष्यब्रह्मणः सत्यत्वम्, देश-काल-वस्तुकृतत्रिविधान्तस्य निवारणं च ॥ २७ ॥

तटस्थलक्षणफलं स्वरूपलक्षणम्

**सच्चिदद्वयसौख्यरूपममुष्य वास्तवलक्षणम्,**
**नानृतेऽस्फुरणेऽसुखे पुरुषार्थतेति तदात्मता।**

---

१. विबुधप्रियाच्छन्दः।

२. विबुधप्रियाच्छन्दः।

**वारणीयविधाप्रकल्पितभेदलब्धपदैः पदै-**
**र्नैकरस्यहतिस्तथैव हि साधु पूर्वमवादिषम्**[1] ॥ २८ ॥

अथ तटस्थलक्षणफलं स्वरूपलक्षणमाह—**सदिति**। अमुष्य = ब्रह्मणः, सत्यज्ञानानन्तानन्दरूपम् स्वरूपलक्षणम्; यतः सत्यापरोक्षसुखभिन्ने वस्तुनि पुरुषार्थता = पुरुषाभिलाषविषयता न भवति इति हेतोः ब्रह्मणः, तदात्मता = सत्यज्ञानादिस्वरूपता श्रुत्योच्यते। सत्यादिपदानि लक्ष्ये स्वस्वविरुद्धानृतत्वादिनिषेधमुखेनाऽपि पर्यवसन्नानीति भावः।

सत्याद्यनेकविधत्वे एकरसत्वहानिशङ्कायामाह—वारणीयाः = निषेधनीयाः, याः विधाः = प्रकाराः असत्यत्वादयः, ताभिः, हेतुभिर्निषेध्येषु कल्पितभेदैः = लब्धावकाशैः सत्यादिपदैः एकरसत्वस्य हानिर्न हि। यतः = उक्तप्रकारेणैव, साधु पूर्वमवादिषम् = सम्यक् चतुर्दशश्लोके[2] उक्तम् ॥ २८ ॥

युक्त्या ब्रह्मणः सत्यत्वसाधनम्

**सत्यत्वं तस्य सौक्ष्म्यान्नभस इव जगन्नीलिमाधारभावात्,**
**अव्यावृत्तेरवृत्तेरखिलदृशितया सर्वबाधावधित्वात्।**
**निःसङ्गत्वाविरोधात् सकलगततयाऽऽत्मत्वतः साक्षिभावाद्,**
**अन्यद्रष्टुर्निषेधात् स्फुटवचनशतैः स्वानुभूत्या च सिद्धम्**[3] ॥ २९ ॥

युक्त्या सत्यत्वं साधयति—**सत्यत्वमिति**। तस्य बह्मणः सत्यत्वं सिद्धम्। कस्मात् ? सूक्ष्मत्वात्, कारणत्ववत् सूक्ष्मत्वस्य तत्रैव विश्रान्तेः।

पुनः, यथा नभः मिथ्यानीलत्वाधारत्वात् सत्यम्, तथा जगद्रूपनीलाधिष्ठानत्वात्।

पुनः, परस्परव्यावृत्तसर्वेषु ब्रह्मणो व्यावृत्त्यभावात्, अनुवृत्तेरिति यावत्।

पुनः, अवृत्तेः = कुत्रचिदवृत्तेः, आधेयतारहितत्वात्।

पुनः, सर्ववस्तुबोधरूपतया।

पुनः, अनवस्थाभिया यत् सर्वावधि तदेव ब्रह्मेति तत्त्वादपि।

पुनः, निःसङ्गत्वस्य ब्रह्मगतस्य सत्यत्वेनाविरोधात्।

पुनः, सर्वगततया, नानित्यं सर्वगं भवतीति।

पुनः, आत्मत्वात् सर्वस्य कालादेः।

पुनः, साक्षित्वात्। अनवस्थाभिया साक्ष्यन्तराभावादसाक्षिकब्रह्माभावासिद्धेरिति भावः।

पुनः, श्रुत्या ब्रह्मान्यद्रष्टृनिषेधात् द्रष्टुरभावे जगदान्ध्यप्रसङ्गात्।

पुनः, व्यक्तबचनशतैः सत्यपदघटितश्रुतिभिः, च = पुनः तत्त्वविदनुभवेन ॥ २९ ॥

ब्रह्मणश्चिद्रूपत्वसिद्धिः

**आत्मत्वादीक्षितृत्वादखिलवशितया शास्त्रयोनित्ववादात्,**
**कामाभिध्योपदेशात् शशितपनमुखद्योतिभारूपतोक्तेः।**

---

१. विबुधप्रियाच्छन्दः।

२. अपवादप्रकरणे 'सच्चित्सौख्ये' त्यादिचतुर्दशश्लोक इत्यर्थः।

३. स्रग्धराच्छन्दः।

**साक्षादेवापरोक्षादसुकृतसुकृताध्यक्षसाक्षित्ववादात्,**
**सर्वज्ञज्ञादिशब्दात् स्फुटवचनशतैश्चापि सच्चित्स्वभावम्**[1] ॥ ३० ॥

चिद्रूपत्व ब्रह्मणः साधयति—**आत्मत्वादि**ति । सद्ब्रह्म चित्स्वभावम् । कस्मात् ? श्रुतिषु ब्रह्मण्यात्मत्वोक्तेः ।

पुनः, ईक्षितृत्वोक्तेः = 'तदैक्षत' इत्यादौ ।

पुनः, सर्वस्य स्वाधीनीकरणशीलत्वात् । तथा चोक्तम्—'एतस्यैवाक्षरस्य' इत्यादि ।

पुनः, उपनिषदेकगम्यत्वकथनात् ।

पुनः, क्वचित् स्रष्टव्यरूपकामविषयकजननसङ्कल्परूपध्यानोपदेशात् ।

पुनः, चन्द्रसूर्यप्रधानकानामग्न्यादीनां प्रकाशनस्वभावकप्रकाशरूपत्वकथनात् ।

पुनः, अन्यानपेक्षप्रत्यक्षरूपत्वात् ।

पुनः, पापपुण्ययोः प्रेरकत्वस्य साक्षाद् द्रष्टृत्वस्य चोक्तेः 'कर्माध्यक्षः एष ह्येवासाधु कर्म कारयति' इत्यादिना ।

पुनः, ब्रह्मणि ज्ञ-सर्वज्ञादिशब्दात् 'ज्ञः कालकालो गुणी' इत्यादौ ।

पुनः, 'चिन्मात्रोऽहं सदाशिवः', 'चैतन्यमातमनो रूपम्' इत्यादि साक्षाच्चेतनशब्द-वद्वचनैरपि ॥ ३० ॥

ब्रह्मण आनन्दरूपत्वम्

**सौख्योत्कर्षावधित्वान्निखिलसुखकणाम्भोनिधित्वश्रुतिभ्यो,**
**मुक्तप्राप्यत्ववादान्निरवधिपरमानन्दभूमात्मकत्वात्** ।
**सर्वप्रत्यक्त्ववादान्निधिनिलयवधूसाम्यवादात् सुषुप्ता-**
**वानन्दे ब्रह्मतोक्तेरपि च रसतया तत् सदानन्दरूपम्**[2] ॥ ३१ ॥

आनन्दरूपतां निरूपयति—**सौख्ये**ति । तद ब्रह्म सदा आनन्दरूपम् । कस्मात् ? आनन्दत्वाधिक्यस्यावसानभूमित्वात् । उक्तश्च सौख्योत्कर्षो मनुष्यसुखमारभ्य श्रुतौ । पुनः, सर्वसुखकणानां समुद्रतुल्यत्वपरक—'एतस्यैवानन्दस्य' ( ) इत्यादिश्रुतिभ्यः । पुनः, मुक्तेः प्राप्यत्वस्य कथनात् । न ह्यनानन्दत्वे मुमुक्षा स्यात् । पुनः, निरतिशयानन्दानन्त-रूपत्वात्, अल्पे सुखत्वस्य निषेधादिति भावः । पुनः, परप्रेमास्पदत्वेन[3] प्रसिद्धो ऽयः सर्व-प्रत्यगात्मा तद्रूपत्वस्य कथनाद् ब्रह्मणः । भूच्छन्ननिधिपक्षिनीड़कामिनीभिः तुल्यतोक्तेः । यथोपरि देशे चरन्तोऽपि निधिं न जानन्ति धावन्ति पक्षिणश्च सायं सुखाय नीड़म्, तद्वज्जीवाः सुप्तौ ब्रह्म । यथा कामिन्या सङ्गतौ न जानाति किञ्चित्, तथा सुप्तौ ब्रह्मणेति ।

पुनः, 'स एष ब्रह्मलोकः' ( ) इति सौषुप्ते प्रकृतानन्दब्रह्मभावोक्तेः ।

पुनः, रसत्वादपि च = आनन्दकररसत्वोक्तेश्च ॥ ३१ ॥

---

१. स्रग्धराच्छन्दः ।

२. स्रग्धराच्छन्दः ।

३. परमप्रेमास्पदत्वे न—इति मुद्रितः पाठः ।

जीवात्मनोऽपि तदेव लक्षणम्

**सच्चित्सौख्यैकरस्यं निगदितमिह यद् ब्रह्मणो लक्षणं तत्,**
**प्रत्यक्तत्त्वेऽपि जैवे सममखिलदृशस्तस्य बाधाद्ययोगात् ।**
**मुख्यप्रेमास्पदत्वादुपधिविभिदया वस्तुभेदाद्यसिद्धे-**
**र्ब्रह्मांशत्वप्रवादात् तनुकरणदृशः स्वप्रकाशत्वतश्च**[1] ।। ३२ ।।

अथोक्तब्रह्मलक्षणं जीवात्मनि दर्शयति--**सच्चिदिति** । अत्र ग्रन्थे सच्चित्सौख्यैकरस्यं यद् ब्रह्मणो लक्षणमुक्तम्, तत् जीवसम्बन्धिनि सर्वान्तर-सर्वसाक्षि-प्रत्यगात्मन्यपि तुल्यम्; कुतः ? सर्वावस्थासाक्षिणस्तस्य बाधविकारादेर्वक्तुमशक्यत्वात्, साक्षिबाधे जगदान्ध्य-प्रसङ्गात्, असाक्षिकबाधासिद्धेश्च ।

पुनः, अनन्यार्थप्रेमास्पदत्वात् ।

पुनः, अज्ञानतत्कार्यदेहादिभेदेनात्मवस्तुनो भेदानित्यत्वादीनामसिद्धेः ।

पुनः, 'यथाग्नेः क्षुद्रा विस्फुलिङ्गाः' इत्यादिना ब्रह्मांशत्वस्य कथनात् ।

पुनः, देहेन्द्रियद्रष्टुः स्वप्रकाशत्वादपि । न हि इन्द्रियसाक्षी जड़ेन परेण वा केनचिद् भास्य इति भावः ।। ३२ ।।

आत्मनः सत्यत्वस्य दार्ढ्यम्

**स्वप्नार्थैर्बाध्यमानैरयमपि सह यद् बाध्यमानो न दृष्टो,**
**बाधद्रष्टा स्वयं सन् कथमिव कलयेदात्मबाधं दृगात्मा ।**
**दृग्भेदे यन्न मानं यदपि न च समा दृग्दृशोर्गोचरो वा,**
**यच्चासौ निर्विकारस्तदयमनवधिः प्रत्यगात्मा सदात्मा**[2] ।। ३३ ।।

उक्तमेवात्मसत्यत्वं पुनर्दार्ढ्यायाह—**स्वप्नार्थैरिति** । यत् = यस्मात्, जाग्रदव-स्थायां बाध्यमानैः स्वाप्नपदार्थैः सह प्रत्यगात्माऽपि तथा न दृष्टः । किञ्च, दृगात्मा = दृग्रूपः, स्वयं बाधद्रष्टा सन् आत्मबाधं कथमिव जानीयात् । यतो न स्वभावं कोऽपि प्रत्यक्षयति ।

पुनः, यत् = यस्मात्, दृगन्तरे, मानं नास्ति, प्रत्युत तन्निषेधेनान्योऽतोऽस्ति द्रष्टेत्याद्यस्ति तत् । तथा चान्येनापि न दृगात्मबाधज्ञानम् ।

अपि च, सत्यपि दृगन्तरे दृक्त्वेन तुल्या दृक्, अतः दृशेः = दृगन्तरस्य विषयो वा यत् यस्मात् न स्यात् । न हि समानप्रदीपयोर्विषयविषयिभावो दृष्टः ।

पुनः, यस्मादसावात्मा निर्विकारः = बालत्व-जाग्रत्त्वादिसर्वधर्मशून्यः, तत् = तस्मात्, अपरिच्छिन्नोऽयं प्रत्यगात्मा सदात्मा = सत्यस्वरूपः ।। ३३ ।।

आत्मनश्चिद्रूपस्य दार्ढ्यम्

**यद् बाल्यादिष्ववस्थास्वहमिति भात्येकरूपो विभिन्ना-**
**स्वध्यक्षं जाग्रदर्थानिव निजमहसा यच्च सुप्तोऽपि वेत्ति ।**

---

१. स्रग्धराच्छन्दः ।

२. स्रग्धराच्छन्दः ।

**यच्चाहङ्कारमोषेऽप्यपरिमुषितचित् सुप्तिसौख्यादिसाक्षी,**
**द्रष्टुर्दृष्टेरलोपे श्रुतिरपि तदसौ प्रत्यगात्मा दृगात्मा**[1] ॥ ३४ ॥

एवं चिद्रूपतामाह—**यदिति** । तत्=तस्मात्, असौ प्रत्यगात्मा दृगात्मा = ज्ञानरूपः तस्मात् । कस्मात् ? यस्मात् भिन्नासु अवस्थासु एकरूपः स्फुरति, कथम् ? 'स एवाहम्, स एवाहम्' इति । पुनः, यस्मात् सुप्तोऽपि = लीनेन्द्रियोऽपि सन् स्वरूपप्रकाशेन जाग्रत्पदार्थानिव अध्यक्षम् = प्रत्यक्षं वेति मनोमयानपि । पुनः, यस्मात् अहङ्कारस्य लयेऽपि अनष्टचिद्रूपः सुषुप्तेः तत्सुखाज्ञानयोश्च साक्षी । यस्माच्च द्रष्टुः दृष्टेः = स्वरूपभूतज्ञानस्य नित्यत्वे श्रुतिरप्यस्ति—'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' ( ) इति ॥ ३४ ॥

प्रत्यगात्मनि आनन्दरूपता

**यच्चात्मान्यद् ब्रुवाणं प्रियमिति तव तद् रोत्स्यतीति ब्रवीति,**
**प्राज्ञेनैक्यं सुषुप्तौ निगदति च यदानन्दसंविन्मयेन ।**
**इच्छा यत् स्वानुकूले त्रिजगति विदिता स्वप्रतीपे जिहासा,**
**यच्च स्यां सर्वदेति स्पृहयति तदसौ प्रत्यगात्मा सुखात्मा**[2] ॥ ३५ ॥

अथानन्दरूपतां द्रढयति—**यच्चेति** । यस्मादपि 'आत्मनोऽन्यद् वस्तु प्रियम्' वदन्तं प्रति तदात्मभिन्नं वस्तु तव रोत्स्यति = नङ्क्ष्यति, स्ववियोगेन त्वां रोदयिष्यतीति वा वदति श्रुतिः । यस्माच्च सुषुप्तौ आनन्दरूपज्ञानप्रचुरेण प्राज्ञेन = ईश्वरेण सहैकतामात्मनो वदति श्रुतिः । पुनः, यस्मात् त्रिजगति = लोकत्रयस्थप्राणिषु स्वोपकारके वस्तुनि इच्छा ( रागः ), तथा स्वानुपकारके त्यागेच्छा ( द्वेषः ) प्रसिद्धा । यस्माच्च 'सर्वदाऽहं स्याम्', ममाभावो मा भवतु कदापीति यावत्, इत्येवं सर्वोऽप्यात्मानं वाञ्छति; तस्मात् कारणादसौ प्रत्यगात्मा आनन्दस्वरूपः ॥ ३५ ॥

महावाक्यानामखण्डार्थनिश्चयः

**इत्थं मीमांसमाने श्रुतिगुरुवचनैर्युक्तिभिश्चानुभूत्या,**
**शश्वज्जीवेशतत्त्वे निपुणमधिगते वस्तुतो लक्षणैक्ये ।**
**निष्प्रत्यूहं निजार्थं समधिगमयितुं तत्त्वमस्यादिवाक्या-**
**न्याद्यन्तावेक्षणाद्यैरधिगतहृदयान्यञ्जसैव क्षमन्ते**[3] ॥ ३६ ॥

उक्ताखिलनिर्णयेन महावाक्याऽखण्डार्थनिश्चयो भवतीत्याह—**इत्थमिति** । उक्तरीत्या वेद-गुरुवाक्य-युक्ति-निजानुभवैर्निरन्तरं विचार्यमाणे । जीवेश्वरस्वरूपे वस्तुतः स्वरूपलक्षणैकत्वे दृढं यथा स्यात् तथा निश्चिते सति 'तत्त्वमसि' आदिमहावाक्यानि शीघ्रमेव निर्विघ्नं यथा स्यात् तथा अखण्डप्रत्यगभिन्नचिद्रूपपरूपनिजार्थं सम्यक् निश्चाययितुम् क्षमन्ते = समर्थानि भवन्ति । कीदृशानि ? उपक्रमोपसंहारविचारणाद्यैर्निश्चिताभिप्रायाणि ॥ ३६ ॥

---

१. स्रग्धराच्छन्दः ।

२. स्रग्धराच्छन्दः ।

३. स्रग्धराच्छन्दः ।

तत्त्वमसीति वाक्यार्थबोधः

**प्राक् सर्गाद् यत् सदासीदसृजदथ च यत् तेज आदिप्रविष्टम्,**
**जीवस्तस्मिन् यदासीद् यदखिलमनृतं नामरूपं वितेने।**
**तत् सत् तच्छब्दवेद्यं त्वमिति निगदितः श्वेतकेत्वाख्यजीवो,**
**वाक्यार्थं नित्यसिद्धं गमयदसिपदं वर्तमानं ब्रवीति[1] ॥ ३७ ॥**

अथ 'तत्त्वमसि' इत्यत्र पदार्थमाह—**प्रागिति**। सृष्टेः पूर्वं यत् सद् = वस्तु, आसीद् अथ = अनन्तरम्, यत् = अग्न्यादि, असृजत्। पुनः, तस्मिन् = स्वसृष्टे प्रविष्टं सत्, यत् = जीवः, आसीत्, ततो ब्रह्मादिजीवरूपेण यत् = मिथ्यात्मकसर्वनामरूपविस्तारं चक्रे। तत् सत् 'तत्त्वमसि' इत्यत्र तच्छब्देन ज्ञेयम्। तच्छब्दस्यार्थ इति यावत्।

पुत्रं प्रति पिताऽऽरुणिरुवाच—'तत्त्वमसि' इत्यतः त्वमिति = त्वमित्यनेन पदेन श्वेतकेतुनामकजीव उक्तः। 'असि' इति पदं तु नित्यसिद्धं वाक्यार्थं बोधयत् वर्तमानमर्थं कथयति। वाक्यार्थवर्तमानसत्तात्मकोऽसि-पदार्थः ॥ ३७ ॥

वाक्यार्थेऽन्वयप्रकारः

**बाधाध्यासविशेषणैक्यविषयं नाम्नोश्चतुर्धा मतम्,**
**सामानाधिकरण्यमाद्यमिह न व्यर्थोद्यमा स्यात् श्रुतिः।**
**ध्यानाद्यश्रवणादनित्यफलतादोषाच्च नाध्यासधीः,**
**तादात्म्यं न विरुद्धयोरिति बलात् वस्त्वैक्यपक्षस्थितिः[2] ॥ ३८ ॥**

पदार्थान्वयप्रकारं दर्शयति—**बाधेति**। समानविभक्तिकनाम्नोः सामानाधिकरण्यम् = एकार्थप्रतिपादकत्वम्, अभेदान्वय इति यावत्, चतुर्धा = चतुर्विधं मतम्। कीदृशम्? बाधाध्यासविशेषणैक्यविषयम्। तत्र १. बाधो नाम अनृतज्ञानस्य यथार्थज्ञानेन निवृत्तिः। यथा अन्धकारे स्थाणौ 'पुरुषोऽयम्' इति ज्ञानस्य 'पुरुषोऽयं न स्थाणुः' इति निश्चितज्ञानेन। २. एतदेव बाधविषयकं सामानाधिकरण्यं शुक्त्यादौ 'इदं रजतम्' इति द्वितीयम्। ३. 'दण्डी पुरुषः' इत्यादि तृतीयम्। ४. 'प्रकष्टप्रकाशश्चन्द्रः', 'सोऽयं देवदत्तः' इत्याद्यैक्यविषयम्।

इह 'तत्त्वमसि' इति वाक्ये आद्यं न; यत श्रुतिः व्यर्थोद्यमा स्यात्। मोक्षायोपायोपदेशोद्यमा हि श्रुतिः; ब्रह्मणो बाधे मोक्षस्यैव बाधात्। जीवस्य बाधो मुमुक्षुभावेन मोक्षबाधाद् व्यर्थोद्यमा स्यात्।

पुनः, अध्यासधीरप्यत्र न। कुतः? 'मनो ब्रह्मेत्युपासीत' इत्यादिवत् ब्रह्मत्वध्यानादिविधेरश्रवणात्। सत्यपि क्वचिच्छ्रवणे अनित्यफलतादोषादपि। ध्यानं च मानसी क्रिया, सा चानित्यफलिकेति। तथाऽत्र विरुद्धयोः 'तत्' 'त्वम्' पदार्थयोः, तादात्म्यम् = विशेष्यविशेषणभावो न इति = हेतोः एकवस्तुविषयकसामानाधिकरण्यपक्षस्यात्र बलात् स्थितिः सिद्धा ॥ ३८ ॥

---

१. स्रग्धराच्छन्दः।

२. शार्दूलविक्रीडितच्छन्दः।

लक्षणया महावाक्यार्थबोधः

**अभिधेयमत्र पदयोरसङ्गतं, न विरुद्धधर्मियुगमैक्यमेति यत् ।**
**उपयोगमूलघटनाद्ययोगतो, न परस्परार्थघटितेऽपि लक्षणा[1] ॥ ३९ ॥**

अथात्र वाच्यार्थयोरेकत्वासम्भवेन एकत्वरूपवाक्यार्थं लक्षणया सम्भावयति त्रिभिः श्लोकैः । अत्र = वाक्ये, 'तत्' 'त्वम्'—पदयोः अभिधेयम् = वाच्योऽर्थः, असङ्गतम् = परस्परानन्वयि । कुतः ? यत् = यतः, विरुद्धधर्मयुतवस्तुद्वयम्, एकताम् = अभेदं न एति = प्राप्नोति । यष्टिपदस्य यष्टिधरे इव लक्षणापि परस्परार्थयुक्ते न सम्भवति । तथा हि—जगत्कारणत्वरूपतत्पदार्थविशिष्टे जीवे लक्षणया 'जगत्कारणवाँस्त्वम्' इति वाक्यार्थः स्यात् । एवं त्वम्पदार्थविशिष्टतत्पदार्थेऽपि बोध्यम् । न चैवं सम्भवति, कुतः ? एतादृशोपदेशस्य मोक्षे उपयोगायोगात् । तथा मूलघटनादेः, उपक्रमसङ्गत्यादेश्चायोगात् ॥ ३९ ॥

**न च गाङ्गतीरमिव वाच्यसङ्गि वा, प्रथितं तृतीयमिह योग्यमन्वये ।**
**पदयोर्न चैकतरभागलक्षणाऽध्यवसानलिङ्गमुपपद्यतेऽपि वा[2] ॥ ४० ॥**

उक्ताऽजहत्स्वार्थाऽपि न सम्भवतीत्याह—**न चेति** । 'गङ्गायां घोषः' इति वाक्येऽन्वययोग्यं गङ्गार्थप्रवाहयोगि तृतीयपदार्थतीरमिवेह महावाक्येऽन्वययोग्यमन्यतरपदार्थसङ्गि तृतीयं वस्तु किमपि न प्रथितम् = न प्रसिद्धमस्ति । तथा पदयोः = 'तत्' 'त्वम्' पदयोर्मध्ये कस्यचिदेकपदस्य जहदजहत्स्वार्थारूपभागलक्षणाया निश्चयेऽपि न लिङ्गम् = न किञ्चिद् विनिगमकमस्ति । न वा उपपद्यतेऽपि अन्यतरभागलक्षणा; निर्विशेषाखण्डवाक्यार्थतात्पर्यस्य निर्णीतस्य कथमप्यलाभादिति भावः ॥ ४० ॥

**न तु मानसिद्धमपरं परोपमं निजरूपमस्य न च भाविनोऽस्तिता ।**
**श्रुतहानिरश्रुतगतिश्च नोचितेत्युचिता द्वयोरपि हि भागलक्षणा[3] ॥ ४१ ॥**

नन्वस्तु तत्पदं गौण्या वृत्त्या तत्सदृशपरम्, तथा च 'ब्रह्मसदृशोऽसि त्वम्' इति वाक्यार्थोऽपि ? इत्याशङ्कामपनुदन् पदयोर्भागलक्षणामङ्गीकरोति—**न त्विति** । अस्य = जीवस्य, परोपमम् = ईश्वरसदृशम्, प्रसिद्धरूपादन्यत्, निजरूपम् तु न केनचिदपि मानेन सिद्धम्, येन त्वं तत्सदृशोऽसीत्यर्थः स्यात् । प्रसिद्धरूपत्वसदृशमेवेति भावः । मुक्तिसमये तत्सदृशरूपं स्यादित्यपि न; यतो भाविनोऽस्तिता = वर्तमानता न च भवति । भवति चात्र वर्तमानार्थकमसिपदमिति । किञ्च, उक्तरीत्या श्रुतस्य = तत्पदेन प्रतीतस्य ब्रह्मणः असिपदेन वर्तमानस्य त्यागः, अश्रुतस्य च = कालान्तरभाविरूपान्तरस्य च कल्पना नोचिता—इति हेतोर्द्वयोरपि तत्-त्वं-पदयोर्भागलक्षणैवोचिता ॥ ४१ ॥

---

१. रथोद्धताच्छन्दः ।

२. रथोद्धताच्छन्दः ।

३. रथोद्धताच्छन्दः ।

लक्षणासमन्वयः

**अपहाय धर्मनिचयं विरोधिनम्, तनुबुद्धिसाक्षिसदनन्तचिद्घनम्।**
**उपलक्ष्य सोऽयमिति वाक्यवत् ततो, घटयेदखण्डविषये पदद्वयम्[१] ॥ ४२ ॥**

उचितलक्षणां समन्वाययति—**अपहायेति**। यथा 'सोऽयं देवदत्तः' इति वाक्ये तद्-इदम्पदार्थयोः प्रतीताभेदे विरुद्धे तत्तद्देशकालादिविशेषणमुपेक्ष्य देवदत्तव्यक्तिमात्रं पदाभ्यां संलक्ष्य तद्रूपवाक्यार्थेऽभिन्ने वाक्यात्मकतदिदम्पदद्वयं बोधकतया नीयते, तथा तत्-त्वम्पदार्थयोर्निश्चिताभेदविरोधिनम् मायाऽविद्यातत्कृतसर्वज्ञत्वाल्पज्ञत्वादिधर्मसमूहम् अपहाय = त्यक्त्वा, शरीरबुद्धिसाक्षिचिन्मात्रम् भागं त्वम्पदेन, सदपरिच्छिन्नचिन्मूर्तिभागं तत्पदेन उपलक्ष्य, ततः = अनन्तरम्, लक्षितैकचिन्मात्राखण्डवाक्यार्थविषये वाक्यात्मकपदद्वयं घटयेत् ॥ ४२ ॥

**परोक्षानवाप्तत्वबुद्धिं परस्मिन्नपूर्णत्व-दुःखित्वमोहं प्रतीचि।**
**निहन्तुं निजालौकिकं चात्मतत्त्वं, पदे वक्तुमन्योऽन्यतः साभिलाषे ॥ ४३ ॥**

एवमेकार्थत्वे पदयोरन्यतरस्य वैयर्थ्यमाशङ्क्याह—**परोक्षेति**। परस्मिन् = तत्पदलक्ष्ये श्रोतुरुत्पन्नाम् परोक्षत्वालब्धत्वबुद्धिं निहन्तुम् त्वम्पदमपेक्ष्यते। त्वम्पदलक्ष्यं तु आत्मरूपत्वात् सदैवापरोक्षं लब्धं च। एवम् प्रतीचि = त्वम्पदलक्ष्ये प्रतीतम् अपूर्णत्व-दुःखित्वरूपभ्रमम् निहन्तुं तत्पदमपेक्ष्यते, तत्पदलक्ष्यं च। पूर्णत्वादुःखित्वे न कस्याप्यतोषः। तथा च परस्परलक्ष्याभेदविधयोक्तफलाय, अत एवालौकिकनिजात्मस्वरूपं वक्तुं च तत्त्वम्पदे परस्परं सापेक्षे, नातो वैयर्थ्यमिति भावः ॥ ४३ ॥

महावाक्यस्य अखण्डत्वनिरूपणम्

**असंसर्गि सत्यार्थता स्यात् पदानामनन्यार्थता वाऽप्यखण्डार्थताऽत्र।**
**प्रसिद्धा ह्यसौ चन्द्रमात्रप्रबोधात्, प्रकृष्टप्रकाशः शशीत्यादिवाक्ये[२] ॥ ४४ ॥**

अत्र पदानामखण्डार्थकत्वम् सर्वथा अन्यसंसर्गशून्यनित्यवस्त्वर्थकत्वम्। अथवा जातिगुणाद्यन्याघटितवस्त्वर्थकत्वमपि स्यात्। हि = यतः, असौ = उक्तविधाऽखण्डार्थता 'प्रकृष्टप्रकाशः चन्द्रः' इत्यादिवाक्ये प्रसिद्धा। कस्मात्? प्रश्नयितृजिज्ञासाया उत्तरयितृतात्पर्यस्य चानुरोधेन चन्द्रमात्रस्यैव बोधात्। प्रकृतवाक्यत इति शेषः ॥ ४४ ॥

**प्रकर्षप्रकाशत्वचन्द्रत्वयोगव्यवच्छेदभेदादयो नैव पृष्टाः।**
**न वा शाब्दधीरस्त्यजिज्ञासितेऽर्थे, ततो वाक्यतश्चन्द्रमात्रप्रबोधः[३] ॥ ४५ ॥**

चन्द्रमात्रबोधकत्वमुक्तवाक्यस्य व्युत्पादयति—**प्रकर्षेति**। 'प्रकृष्टप्रकाशः चन्द्रः' इति वाक्यस्य पदत्रयप्रवृत्तिनिमित्तानाम् प्रकर्षप्रकाशत्व-चन्द्रत्वानाम्, चन्द्रे योगः = संसर्गः, उक्तधर्मान्यधर्माणां व्यवच्छेदः = असंसर्गश्चन्द्रे, तथा चन्द्रनिष्ठोऽन्यभेदश्च नैव पृष्टाः = यतो

---

१. रथोद्धताच्छन्दः।

२. भुजङ्गप्रयातच्छन्दः।

३. भुजङ्गप्रयातच्छन्दः।

नैव जिज्ञासिताः। अजिज्ञासिते चार्थे शाब्दबोधो नैव जायते। तस्मादुक्तवाक्यात् चन्द्रमात्रस्यैव बोध इत्यर्थः। भावस्तु प्रकृष्टनिकृष्टादिज्योतिस्समूहमालोक्यात्र 'कश्चन्द्रः?' इति प्रश्नेन चन्द्रव्यक्तिमात्रं ज्ञातुमिष्टं भाति, अतस्तदेव प्रश्नविषयः। इति प्रश्नविषयमाकलय्य जिज्ञासानिवृत्तये जिज्ञास्यमात्रबोधनतात्पर्येण प्रवृत्तोत्तरयितुर्वाक्येनापि प्रश्नविषयविषयकेणैव भाव्यमिति ॥ ४५ ॥

'प्रज्ञानं ब्रह्म' इति महावाक्यस्याखण्डार्थत्वम्

**यः प्राग् विसृज्य भुवनं तनुमाविवेश यः पञ्चभूतसुरमानुषतिर्यगात्मा।**
**येनावलोकयति वक्त्यभिमन्यते च प्रज्ञानमात्रविभवोऽहमसौ परात्मा[1] ॥ ४६ ॥**

एवम् ऋग्वेदगतं 'प्रज्ञानं ब्रह्म' इति महावाक्यस्याखण्डार्थत्वं विशदयति—**य इति।** यः = परमात्मा, प्राक् = सर्गादौ, भुवनं विसृज्य = साङ्गलोकमुत्पाद्य, तनुमाविवेश = सर्वान्तःकरणे प्रतिबिम्बितः।

पुनः, यः परमात्मा पञ्चभूतदेवमनुष्यपश्वादिरूपः ब्रह्मविवर्तत्वादाकाशादीनाम्।

पुनः, येन = प्रत्यक्चैतन्येन, निमित्तमात्रेणेन्द्रियान्तःकरणैः दर्शनवचनाभिमाना भवन्ति। स्वरूपप्रज्ञानमात्रैश्वर्यकः अहम् असौ परमात्मा न परमात्मनाऽभिन्नः—इत्येकचिद्रूपाखण्डार्थत्वमिति भावः।

अत्र प्रथमपादेन वाच्यार्थौ, ततः पादाभ्यां क्रमेण ब्रह्म-प्रज्ञानपदलक्ष्यार्थौ, चतुर्थेन वाक्यार्थश्च दर्शिताः ॥ ४६ ॥

'अहं ब्रह्मास्मि' इति वाक्यस्याखण्डार्थत्वम्

**यद् व्याकृतं जगदभूत् तमसा नखाग्राद्, यच्च प्रविष्टतनुकृत्स्नमकृत्स्नमासीत्।**
**प्रेयस्तदेव परमं परमार्थतोऽहम्, ब्रह्मास्मि तद् विदितवद्धि तदेव सर्वम्[2] ॥ ४७ ॥**

यजुर्वेदगतस्य 'अहं ब्रह्मास्मि' इत्यस्य तथात्वमाह—**यदिति।** यद्=ब्रह्म, तमसा = तमःप्रधानमायया, विविधाकारं जगदभूत्।

ततः पुनः, यद् ब्रह्म, कृत्स्नम् = सर्वात्मकमपि नखाग्रपर्यन्तम् प्रविष्टतनु = प्रविष्टशरीरकम्, सत्, तमसा = अज्ञानेन, अकृत्स्नम् = परिच्छिन्नम्, संसारी आसीत्।

तस्मात् तदेव परमम् = ब्रह्म, प्रेयः=अतिशयेन प्रियम्, प्रत्यगात्मस्वरूपम्। अतः परमार्थतः=वस्तुतः, अहं ब्रह्मास्मि।

हि = यतः, तद् ब्रह्मैव विदितवत् = स्वात्मसाक्षात्कारं कृतवत्? मुमुक्षुताऽपि ब्रह्मण एवेति भावः। एतदपि कुतः? यतः ब्रह्मैव सर्वम्।

अत्र पूर्वार्धेन वाच्यार्थौ, 'कृत्स्नम्' इति पदेन लक्ष्यार्थोऽपि सूचितः, उत्तरार्धेन वाक्यार्थ इति विवेकः ॥ ४७ ॥

---

१. उभयत्र वसन्ततिलकाच्छन्दः।

तैत्तिरीयमहावाक्ये ब्रह्मात्मनोरैक्यम्

**यश्चायमत्र पुरुषे प्रथते गुहान्तर्यश्चाप्रमेयसुखभूः सवितुश्च बिम्बे ।**
**एकः स इत्यभिदधुः स्फुटमैक्यमेके तद्वेदनाच्च विलयं जगतश्च तत्र**[1] ॥ ४८ ॥

क्वचित्तु ब्रह्मात्मनोरैक्यं स्फुटमेवेत्याह—**यश्चेति** । अत्र पुरुषे पञ्चकोशगुहामध्ये योऽयमात्मा साक्षिरूपेण प्रकाशते, यश्च सूर्यमण्डले अनन्तानन्दघनः परमात्मा प्रथते—स एकः—इति स्फुटमेवैक्यम्, एके तैत्तरीया अभिदधुः ।

पुनः, तद्वेदनात् = एकात्मसाक्षात्कारात्, तत्र = आत्मन्येव जगतो विलयं चाभिदधुः । तेनाप्यैक्यदार्ढ्यमेवेति भावः ॥ ४८ ॥

'तत्त्वमसि' इति महावाक्यस्य तात्पर्यम्

**आसीत् सदेव हि भवाननृतं विधाय, तेजोमुखं तदभिमत्य बभूव जीवः ।**
**देहान्तशुङ्गमवधूय विलोकय स्वं सद् ब्रह्म तत्त्वमसि बोधसुखाद्वितीयम्**[2] ॥ ४९ ॥

अथ सिंहावलोकनेन सामवेदगतनववारोपदिष्टं 'तत्त्वमसि' इति महावाक्यं तात्पर्योद्भावनेन विशदयति—दर्शाभिः श्लोकैः । हे श्वेतकेतो ! सृष्टेः पुरा भवान् सदेवासीत् । ततः अनृतम् = शुक्तिरजतवन्मिथ्यैव तेजःप्रभृति भूतम् उत्पाद्य तद्रूपशरीरादि अभिमत्य = आत्मत्वेन स्वीकृत्य, जीवो बभूव भवान् । तस्माद् देहपर्यन्तम् शुङ्गम् = अंकुरम्, कार्यजातम्, अवधूय=मिथ्यात्वेन तिरस्कृत्य, स्वम्=परमार्थनिजस्वरूपम्, पश्य । 'चिदानन्दाद्वयं यत् सद्रूपं ब्रह्म तत् त्वमसि' इति । **प्रथम उपदेशः** ॥ ४९ ॥

**सम्पद्य यत्र मधुनीव रसाः सुषुप्तौ, सौख्यैकरस्यमधिगम्य जना न विद्युः ।**
**यत्प्रच्युताः पुनरमी बहुदुःखभाजः, सद् ब्रह्म तत्त्वमसि नासि कदापि दुःखी**[2] ॥ ५० ॥

एवं च किमिति निजसद्रूपताया अप्रतीतिः ? इत्यत आह—**सम्पद्येति** । जनाः प्रतिदिनं सुषुप्तौ, मधुनि नानापुष्परसा इव, यत्र = सद्रूपे सम्पद्य = सम्यग्गत्वा, सद्रूपसुखभावेन एकरसताम् = समानस्वभावताम्, ऐक्यमिति यावत्, प्राप्यापि स्वस्य सुखत्वं न जानन्ति; मूलाज्ञानस्य सत्त्वेन तमसि ज्ञातृज्ञेयादिभेदानां लयेनैकीभावादेव । पुनः, यस्मात्= सद्रूपात्, प्रच्युताः असद्रूपानुसन्धानयुताः सन्तः अमी जीवाः बहुदुःखिनो भवन्ति. तत् सद् ब्रह्म त्वमसि, दुःखी ससारी कदापि न असि । अयं भावः—सुप्तौ प्राप्तायामपि योग्यतायामज्ञानमात्रावृत्तेर्नात्मसाक्षात्कारः, जाग्रत्स्वप्नयोस्त्वसङ्ख्याज्ञानकार्यावृत्तेरिति । **इति द्वितीयः** ॥ ५० ॥

**अब्धिर्यथा जलधरैरपनीय नीतो नद्यादिभावमुदधित्वमतिं जहौ स्वाम् ।**
**एवं भवानुपधिभिः खलु विस्मृतः स्वम्, सद् ब्रह्म तत्त्वमसि संस्मर पूर्णभावम्**[3] ॥ ५१ ॥

सतश्च्युता जाग्रदादौ 'सतश्च्युताः' इत्येवमपि न सत्स्मृतिं यान्तीति सदृष्टान्तमुक्त्वा स्मारयति—**अब्धिरिति** । जलधरैः = मेघैः, अपनीय = पृथक् कृत्वा नद्यादिभावं

१. वसन्ततिलकाच्छन्दः । २. वसन्ततिलकाच्छन्दः ।
३. वसन्ततिलकाच्छन्दः ।

नीतोऽब्धिः यथा स्वामदधिभावमर्ति तत्याज, एवम् शरीराद्युपाधिभिः स्वम् = निजसद्-रूपम्, भवान् विस्मृतो न स्मरति, अतः तत् सद् ब्रह्म त्वमसीति निजपरिपूर्णभावमिदानीं त्वं संस्मर श्वेतकेतो ! **इति तृतीयः** ॥ ५१ ॥

**जीवप्रहीणतरुशोषविशेषलिङ्गाद् आत्मा परोऽस्ति तनुतः स च नित्य एकः ।**
**विद्धचैतदात्म्यमखिलं वितथद्वितीयं, सद् ब्रह्म तत्त्वमसि मुञ्च विभेदमोहम्[1] ॥ ५२ ॥**

ननु सत उत्पत्तेस्तत्रैव लयाच्चानित्या देहाद्या एव जीवाः, सच्च विकारी ? इत्यत आह—**जीवेति** । देहादात्माऽन्योऽस्ति, कस्मात् ? जीवहीनवृक्षस्य शोषविशेषरूप-गमकात्, यद्यदवयवेभ्योऽपसरति जीवः, शुष्यन्ति च तत्तदवयवा इति । वृक्षादेरन्यत्वाव-गमात् स चात्मा एकः । तथा नित्यः । उत्पत्तिप्रलयौ तु देहाभिमानग्रहण-परित्याग-निबन्धनौ, न वस्तुत इति भावः । अखिलं जगत् अनृतद्वितीयकः एष आत्मैव इति त्वं विद्धि = जानीहि । इत्येकत्वनिर्विकारित्वमिति भावः । तस्मात् 'तत् सद् ब्रह्म त्वमसि, ततस्त्वं भेदभ्रान्तिं त्यज' इति **चतुर्थः** ॥ ५२ ॥

**धानान्तरुन्नततरोरुवटः पुरेव, यस्मिन्निदं जगदवस्थितमाविरासीत् ।**
**श्रद्धावता समधिगम्यमणोरणीयः, सद् ब्रह्म तत् त्वमसि सत्यमसत्यमन्यत्[2] ॥ ५३ ॥**

ननु मिथ्यात्वं जगतो ब्रह्मोपादानकत्वे स्यात्, तदेव न सम्भवति; सूक्ष्मतमस्य स्थूलतमोपादानत्वादृष्टेः ? इत्यत आह—**धानान्तरिति** । उन्नततरः = अत्युच्चः, ऊरुः = स्थूलः, वटः, धानान्तः = अत्यन्तसूक्ष्मवटबीजमध्यदेशे पूर्वं स्थितः, आविर्भवति, पश्चात् तद्वत् उत्पत्तेः पुरा इदं जगत् यस्मिन्नवस्थितं पुनराविरासीत् । 'तत् श्रद्धालुज्ञेयं सूक्ष्मात् सूक्ष्मतमं सद्रूपं ब्रह्म त्वमसि सत्यम्, त्वदन्यत्त्वसत्यम्' । इति **पञ्चमः** ॥ ५३ ॥

**अप्सु प्रलीनमिव सैन्धवखिल्यमक्ष्णा पश्यन्ति यन्न करणैरपि हृद्विभातम् ।**
**विन्दन्ति यद् रसनयेव रसं गुरूक्त्या, सद् ब्रह्म तत्त्वमसि दृश्यमिदं तु न त्वम्[1] ॥ ५४ ॥**

ननु ब्रह्म देहगमेव चेत्, कुतो न गृह्यते ? अयोग्यत्वादिति चेत्, कृतं साधनेन ? इत्याह-**अप्स्विति** । यथा दर्शनयोग्यमपि लवणखण्डम् जले प्रलीनं द्रवरूपतां गतम् चक्षुषा न पश्यन्ति, तद्वत् हृदये साक्षिस्वप्रकाशतया विभातमपि यत् करणैर्न पश्यन्ति; विवेका-भावादिति भावः । यथा च जलस्थं रसं लवणं जिह्वया विन्दन्ति, तद्वद् गुरूपदेशेन यद् विन्दन्ति तत् सद् ब्रह्म त्वमसि, इदं दृश्यं तु त्वं न । **इति षष्ठः** ॥ ५४ ॥

**चौरैरिवाक्षि पुरुषो विपिने विसृष्टो रागादिभिस्तनुषु नद्धविशुद्धदृष्टिः ।**
**पान्थैरिवैव गुरुणाऽसि विमुक्तबन्धः, सद् ब्रह्म तत् त्वमसि याहि सुखं स्वधाम[3] ॥ ५५ ॥**

बन्धनिवर्तकः सद्गुरूपदेश एवेति सदृष्टान्तमाह—**चौरैरिति** । यथा कश्चित् पुरुषः चौरैर्बद्धदृष्टिः स्वदेशाद् दूरमानीयापहृतसर्वभूषणादिर्विजने वने विसृष्टः = त्यक्तः,

---

१. वसन्ततिलकाच्छन्दः ।

२. वसन्ततिलकाच्छन्दः ।

३. वसन्ततिलकाच्छन्दः ।

तद्वद् रागादिचौरैः स्वस्वरूपात् पृथक्कृत्य निरुद्धशुद्धस्वरूपदृष्टिरपहृतनित्यत्वानिर्मलत्वादिभूषो दुःखबहुल-सहायशून्य-नानायोनिशरीरवने त्वं विसृष्टोऽसि। यथा चैष उक्तपुरुषो दैवागतैः पथिकैर्विमुक्ताखिलबन्धनस्तदुपदिष्टमार्गेण पृच्छन् सुखं स्वगृहं गतः, तथा दैवादाप्तसद्गुरुणा विमुक्ताज्ञानादिबन्धोऽसि त्वम् = यतस्तत् सद् ब्रह्मैव त्वमसि। ततः सुखम्= अपरिच्छिन्नानन्दं स्वस्वरूपं स्वयं शनैस्त्वं याहि=प्राप्नुहि। **इति सप्तमः ॥ ५५ ॥**

**सम्पद्य यत्र करणादिलयक्रमेण, मूढो मृतः पुनरुपैति जनिप्रबन्धम्[1]।**
**प्राज्ञस्तु वञ्चयति मृत्युमुदस्तमोहः, सद् ब्रह्म तत् त्वमसि निस्तर मृत्युबन्धम्[1] ॥ ५६ ॥**

नन्वज्ञानिन इव ज्ञानिनोऽपि मृतिक्रमः? इत्याशङ्क्य मृतिसमयाद् विशेषं दर्शयति—**सम्पद्येति**। मूढः = अनात्मज्ञः, इन्द्रियादिलयक्रमेण = इन्द्रियाणि मनसि, तच्च प्राणे, स च परमात्मनीति क्रमेण यस्मिन् प्राप्य मृतः, पुनः, जनिप्रबन्धम्=जन्मपरम्पराम्, जन्मरूपबन्धनम्, जन्म तदाद्यनेककर्मबन्धनं चेति वा प्राप्नोति।

प्राज्ञः = आत्मज्ञस्तु मूढवत्, यत्र सम्पद्य मृत्युं वञ्चयति = मरिष्यामीति न जानाति; यतः पूर्वमेव निवृत्ताज्ञानः तत् सद् ब्रह्म त्वमसि। ततः मृत्युरूपबन्धम् तद्रूपं त्वं निस्तर = उल्लङ्घ्य, मा स्पृश श्वेतकेतो!। **इत्यष्टमः ॥ ५६ ॥**

**स्तेनः प्रतप्तपरशोरिव दाहबन्धावाप्नोति मूढमतिरप्यनृताभिसन्धः।**
**सत्याभिसन्धिरथ न व्यथते यदात्मा सद् ब्रह्म तत्त्वमसि निर्णुद बन्धशङ्काम्[2] ॥ ५७ ॥**

हेतुभूतसर्वव्यवहारसाम्येऽपि कथं न बध्यते विद्वान्? अत आह—**स्तेन** इति। यथा स्तेनः=चौरः, 'नाहं चौरः' इति मिथ्याभावनायुतश्चेत्, परीक्षणाय प्रतप्तपरशुग्रहणे राजभटैर्नियुक्तः तस्मात् प्रतप्तपरशोर्दाहं, ततो बन्धनं च कारागारे प्राप्नोति, तद्वद् अज्ञानी अपि अनात्मन्यात्मत्वानुसन्धानयुतत्वात् मृत्युपरशोः पीडादाहं पुनर्जन्मादिबन्धं च प्राप्नोति। अथ यथा साधुश्चौरभ्रमेण गृहीतः तथा नियुक्तोऽपि 'नाहं चौरः' इति सत्याभिसन्धिर्न व्यथते, तद्वत् यदात्मा यत् सद् ब्रह्मरूपः, ज्ञानी आत्मन्यात्मत्वानुसन्धानात् सत्याभिसन्धिर्मूढमतिवन्न व्यथते। तत् सद् ब्रह्म त्वमसि, ततो बन्धभ्रमं त्वं दूरीकुरु श्वेतकेतो! **इति नवमः ॥ ५७ ॥**

**पित्रा सुतः सुवचनैरिति बोधितः स्वं सत्याद्वितीयसुखबोधघनं विजज्ञौ।**
**एतद् विमृश्य विदिताद्वयदृक्परोऽपि स्वाराज्यसौख्यमधिगम्य भवेत् कृतार्थः[2] ॥ ५८ ॥**

प्रकृतमुपसंहरन् तात्पर्यमाह—**पित्रेति**। पित्रा इति = उक्तप्रकारेण, सुवचनैः बोधितः पुत्रः नित्यचिदानन्दैकस्वभावं स्वम् = आत्मानम्, विजज्ञौ = विशेषतः साक्षात् ज्ञातवान्। एवं परोऽपि = अन्योऽपि, एतत् = उक्तम्, सकलोपनिषत्तात्पर्यम्, विमृश्य = विचार्य, ज्ञाताद्वितीयचित्कः सन्, स्वराट् = स्वप्रकाशः, तद्भावरूपसौख्यं प्राप्य कृतकृत्यो भवेत्। ५८ ॥

---

१. वसन्ततिलकाच्छन्दः।

२. उभयत्र वसन्ततिलकाच्छन्दः।

आथर्वणमहावाक्यस्याखण्डार्थत्वम्

**ऐक्यं प्रकल्प्य प्रणवेऽखिलस्य पादान् विभज्य प्रविलाप्यशिष्टः ।**
**एकः स आत्मा जगदेऽयमात्मा, ब्रह्मेति विस्पष्टमथर्ववाण्या**[१] ॥ ५९ ॥

अथ आथर्वणवाण्या 'अयमात्मा ब्रह्म' ( ) इति महावाक्यस्याखण्डार्थत्वमाह—**ऐक्य**मिति । अथर्ववाण्या माण्डूक्यश्रुत्या 'अयमात्मा ब्रह्म' ( ) इति विस्पष्टम् । स एक आत्मा जगदे=उक्तः । स कः ? 'ओमित्येतदक्षरमिदं सर्वम्' इत्युपक्रमे सर्वजगतः प्रणवेऽभेदं प्रकल्प्य = प्रणवपादान् पृथक् निरूप्य, जगद्रूपान् त्रीन् पादान् चिद्-ब्रह्मरूपलक्ष्येऽर्धमात्रारूपतुरीयपादत्वेन क्लृप्ते क्रमेण प्रविलाप्य यः लक्ष्यचिद्रूपपादः शिष्टः= शेषितः । अत्र पादत्रयस्य वाच्यार्थत्वम्, तुरीयस्य लक्ष्यार्थत्वमिति विवेकः ॥ ५९ ॥

ब्रह्मात्मैक्यस्योपयोगः

**नित्यं शुद्धं विबुद्धं विकृति विरहितं नित्यमुक्तस्वभावम्,**
**सत्यं सूक्ष्मं निरस्तद्वयमनवयवं पूर्णमानन्दरूपम् ।**
**प्रत्यग् ब्रह्माहमस्मि स्वरसदृशि रवौ ध्वान्तवद् विश्वमेतन्-**
**नासीदस्ति**[२] **भविष्यत्यपि मयि सुखसज्ज्योतिरात्मन्यसङ्गे**[३] ॥ ६० ॥

एवं चतुर्वेदोपनिषत्तात्पर्यसिद्धब्रह्मात्मैक्यस्योपयोगमाह—**नित्य**मिति । एकरसं निर्दोषं चेतनं षड्भावविकाररहितं[४] सदामुक्तम् अबाध्यम् अस्थूलं द्वैतशून्यं निरवयवं व्यापि सुखरूपं सर्वान्तःकरणसाक्षिस्वरूपं ब्रह्म अहमस्मि । अतः असङ्गे सर्वावस्थासम्बन्धरहिते आनन्दसच्चेतनस्वरूपे मयि एतद् विश्वं जगत् पुरा न आसीत्, इदानीं नास्ति, अग्रेऽपि न भविष्यति । कस्मिन् किंवत् ? स्वाभाविकप्रकाशरूपे सूर्येऽन्धकारवत् । तथा चैक्यज्ञानेन सकलानर्थजगन्निवृत्तिनित्यपरमानन्दस्वरूपस्थितिरूपं फलमिति भावः ॥ ६० ॥

ऐक्यज्ञानेनाद्वैतसिद्धिः

**इत्थं वाक्याद् विमृष्टादरणिविमथनाद् वह्निकीलेव सद्यः,**
**सम्भूताखण्डवृत्तिस्तृणमिव निखिलद्वैतजालं समोहम् ।**
**दग्ध्वा निर्वाणसंज्ञे निरतिशयसुखे नित्यसिद्धात्मतत्त्वे,**
**सद्यो याति प्रणाशं कतकरज इवोदस्य पंकं जलस्य**[५] ॥ ६१ ॥

नन्वेमप्यैक्यज्ञानस्य सत्त्वान्नाद्वैतसिद्धिः ? अत आह—**इत्थ**मिति । अरण्योः = काष्ठयोः, घर्षणादुत्पन्नाऽग्निज्वाला इव, इत्थम् = उक्तरीत्या, विचारिताद् वाक्यात्

---

१. इन्द्रवज्राच्छन्दः ।

२. छन्दोभङ्गः । अतः—'नासीदास्ते' इत्युचितः पाठः .

३. स्रग्धराच्छन्दः ।

४. 'जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, नश्यति' इति षड् भावविकाराः ।

५. नलस्य—इति मुद्रितः पाठोऽशुद्धः । अत्र श्लोके स्रग्धराच्छन्दः ।

सद्यः = तत्कालम्, सम्भूता = उत्पन्ना, ब्रह्माकारा वृत्तिः, अज्ञानसहितम् अशेषद्वैतसमूहं दग्ध्वा, कैवल्यसंज्ञके परमसुखरूपे सनातने आत्मस्वरूपे, सद्यः = शीघ्रमेव, प्रणाशम् = लयं याति = प्राप्नोति। यथा उक्तवह्निज्वाला तृणं दग्ध्वा स्वयं शाम्यति, तद्वत्; यथा वा कतकबीजस्य रजो निर्मलीकरणार्थं जले क्षिप्तम्, जलस्य पङ्कमुदस्य व्यापि पङ्कमेकत्र नीत्वा तेष्वेव लयं याति, तद्वत् ॥ ६१ ॥

अखण्डवृत्तेर्माहात्म्यम्

**एषाऽनादित्रितापज्वरविषमभवत्याधिसम्यक्चिकित्सा,**
**ह्येषा स्वाराज्यसम्पन्निरवधिपरमानन्दसन्दोहदोग्ध्री ॥**
**भस्मीभूतं तथाऽस्यां प्रभवति न पुनः कर्मबीजं प्ररोढुम्,**
**सन्देहग्रन्थिभेदावपि च निगदितावेतदासादनेन ॥ ६२ ॥**

**इत्यपवादप्रकरणं द्वितीयम् ॥ २ ॥**

ऐक्यसाक्षात्काराय उक्ताखण्डवृत्तेर्माहात्म्यमाह—**एषे**ति। यथा कफपित्तवातप्रकोपजज्वरो दुश्चिकित्स्यः, तद्वत् आध्यात्मिक-आधिदैविक-आधिभौतिकत्रितापज्वरैर्विषमस्य दुश्चिकित्स्यस्य संसाररोगस्नायादेः एषा = अखण्डाकारवृत्तिः, सम्यक् चिकित्सा = अपनेत्री।

तथा, स्वराट् = इन्द्रः, तद्भावरूपसम्पदपि एषा।

तथा, अपरिच्छिन्नपरमानन्दसमुद्रस्य प्रापिका।

तथा, अस्यां ज्ञानाग्निज्वालायां भस्मीभूतं कर्मबीजम्, प्ररोढुम् = अंकुरान् जनयितुम्, न समर्थं भवति।

तथा, एतदासादनेन सफलैतद्वृत्तिप्राप्त्या सर्वसन्देहस्यानात्मतादात्म्याध्यासरूपचिज्जड़ग्रन्थेश्च भेदावपि = अत्यन्तनिवृत्ती अपि, श्रुत्या कथितौ ॥ ६२ ॥

इति श्रीस्वामिभास्करानन्दसरस्वतीविरचितायां 'कैवल्यकल्पद्रुम'-
व्याख्यायां द्वितीयमपवादप्रकरणम् ॥

२. स्रग्धराच्छन्दः।

१. स्रग्धराच्छन्दः।

# ३. तृतीयं प्रकरणम्

अखण्डधीरपरोक्षज्ञानस्यापि साधिका

**अपरोक्षवस्तुविषयेति शब्दजाऽप्यपरोक्षतां न विजहात्यखण्डधीः[1]।**
**निपुणं निशम्य दशमस्त्वमित्यदो वचनं न हि स्वमुपलब्धुमिच्छति ॥ १ ॥**

ननु वेदान्तवाक्यविचारजाखण्डवृत्त्या अध्यारोपापवादनिरुक्ताद्वितीयप्रत्यगभिन्न-ब्रह्मसाक्षात्कारो न घटते; वाक्यस्यापरोक्षज्ञानजनकत्वाप्रसिद्धेः ? इत्यत आह—**अपरोक्षेति**। शब्दजाऽपि=वाक्यजाऽपि, अखण्डधीः=अखण्डाकारवृत्त्यात्मकं ज्ञानम्, यतः स्वयम्प्रकाशनित्यापरोक्षात्मवस्तुविषया इति हेतोः स्वस्य अपरोक्षतां न त्यजति नापरोक्ष-विषयकं ज्ञानं परोक्षमिति युज्यते। हि=यतः, दशानामज्ञजनानां कश्चिद् गणो नदीमुत्तीर्य स्वातिरिक्तगणनया 'दशमो नद्याऽपहृतः' इति रुदन् तत्र ज्ञातहेतुकान्यपथिकेन प्रेरित एकः पूर्ववन्नवमगणनानन्तरमेव 'दशमस्त्वम्' इत्युक्तः, इदं वचनं निपुणं यथा स्यात् तथा श्रुत्वा, पुनः स्वम्=दशमम् ज्ञातुं नेच्छति=यत्नं न करोति। यदि शब्दात् परोक्षमेव ज्ञानं भवेत्, तर्हि स्वापरोक्षायोपायान्तरे प्रवर्तेतेति भावः ॥ १ ॥

तस्या दृष्टान्तेनोपपादनम्

**न च शब्दजन्यमतिमात्रतः स्वतोऽप्यपरोक्षवस्तु भजते परोक्षताम्।**
**न खलु प्रदीपतरणिप्रकाशयोः प्रतिभासतोऽस्ति विषये पृथग्विधा[1] ॥ २ ॥**

उक्तमेव दृष्टान्तेनोपपादयति— **न चेति**। स्वतोऽपि=स्वभावादेव, अपरोक्षवस्तु=आत्मा, शब्दजन्यधीमात्रात् शब्दजन्यज्ञानविषयत्वापराधात् परोक्षतां भजते—इति न च युज्यते; यतः दीपसूर्यप्रकाशयोर्विषये=घटादौ, प्रकाशभेदहेतोः, पृथग्विधा=कश्चन भेदो न भलु भवति। नहि घटो दीपालोके घटत्वेन भातो रविप्रकाशे पटत्वेन भाति रक्तो व. नीलः। तस्माद् यथावस्तु प्रमाणानां भासकत्वमिति भावः ॥ २ ॥

परोक्षधियां न मानभावोपगमः

**अपरोक्षवस्तुविषया परोक्षधीर्न च मानभावमुपगन्तुमर्हति।**
**स्वत एव शश्वदवभातमात्मनः कुशलोऽपि न स्वमपि गूहितुं क्षमः[1] ॥ ३ ॥**

अस्तु वा क्वचिद् विचित्रस्वभावविषयभेदाद्, ग्राहकसामग्रीभेदाद् वा भानभेदः, अपरोक्षैकस्वभावात्मनि प्रमाणमूर्धन्यमहावाक्यस्य परोक्षधीजनकत्वे च्युतिरेव प्रामाण्यात् स्यात्, इत्याह—**अपरोक्षेति**। अपरोक्षवस्तुविषयिणी परोक्षधीः, मानभावम्=प्रमाण-त्वम्, प्राप्तुम्, न चार्हति। तदभाववति तत्प्रकारकत्वादयथार्थज्ञानं स्यादिति भावः।

किञ्च, प्रवीणोऽपि स्वतः सदा भासमानम् स्वम्=आत्मानम्, आत्मनो गूहितुम्= गोपयितुम्, न क्षमः। 'मातुर्निलीयते कृष्णः' इतिवद् 'आत्मनः' इति पञ्चमी। आत्मानं प्रतीत्यर्थः ॥ ३ ॥

---

१. श्लोकत्रयं रथोद्धता च्छन्दोनिबद्धम्।

## ग्राहकाः सूच्यन्ते

### १. 'साङ्ख्यसूत्राणि' ग्रन्थस्य पूर्णता

विगतेष्वष्टाङ्केषु क्रमशः प्रकाशितः श्रीमन्महादेववेदान्तिकृत-साङ्ख्यवृत्तिसार-सहितो नाम्ना "साङ्ख्यसूत्राणि" ग्रन्थोऽष्टमेऽङ्के पूर्णतां गतः, इति ग्राहकैर्यथेच्छं स पत्रिकातः पृथक्कृत्य स्व-स्वग्रन्थसंग्रहेषु स्थापनीय इति।

### २. 'स्वाराज्यसिद्धि' ग्रन्थस्य प्रकाशनम्

पत्रिकायां नवमाङ्कतश्च श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसुरेश्वराचार्यविरचितः **स्वाराज्यसिद्धिग्रन्थः** ( श्रीस्वामिभास्करानन्दसरस्वतीविरचित-'कैवल्यकल्पद्रुमा' व्याख्यया सहितः ) पूर्ववत् क्रमशः प्रकाशमेष्यति। प्रयतिष्यामश्च—एषोऽपि ग्रन्थः पत्रिकाया द्वादशाङ्कं यावत् पूर्णं प्रकाशितं भवेत्, येनैकस्मिन्नेव वर्षे प्राच्यविद्याग्राहकाः पत्रिकया सहैव सुदुर्लभं ग्रन्थरत्नद्वयमपि प्राप्नुयुरिति सुवर्ण-सौरभसंयोगः।

### ३. ग्रन्थसमीक्षास्तम्भः

प्राच्यविद्यायाम् एतदङ्कत एवैको नवीनः स्तम्भः(परिच्छेदः) **ग्रन्थसमीक्षा**नाम्ना समायोजितः। यत्र हि पालि-प्राकृत-संस्कृतभाषाभिर्निबद्धानां मौलिकानां ग्रन्थानाम्, भूमिका-सूची-परिशिष्टादिविशिष्टसामग्रीजुषां व्याख्याग्रन्थानां वा तत्तच्छास्त्रपारङ्गतेन केनापि विश्रुतेन बुधवरेण सूक्ष्मेक्षिकया समीक्षणं भविष्यति। एतदर्थं सर्वैरपि लेखकैः प्रकाशकैर्वा स्वप्रकाशितग्रन्थस्य प्रतिद्वयं पूर्वमेव कार्यालयेऽवश्यकर्तव्यतया प्रेषणीयम्।

**सम्पादकः**

### प्राच्यविद्यापरामर्शदातृसमितिः

| | | |
|---|---|---|
| श्रीयुत् गिरिराजसिंहः, | हृदयनारायणद्विवेदः, | राजेन्द्रकुमार उपाध्यायः, |
| गणाचार्यः शान्तवीरः, | हनुमानप्रसादशर्मा, | सुभाषचन्द्रत्रिपाठी, |
| भुवनेशकुमार उपाध्यायः, | अशोककुमारसिंहः, | दयासिन्धुशर्मा च। |

## ग्राहकता-साहाय्यम्

प्रत्यङ्कम् ५-०० रूप्यकाणि,
वार्षिकम् ५१-०० रूप्यकाणि,
आजीवनम् ५०१-०० रूप्यकाणि ।

उपरिलिखितं साहाय्यं धनादेश-( मनीआर्डर ), प्रैषादेश-( पोस्टल आर्डर ), अधिकोषविकर्ष-( बैंक ड्राफ्ट ) माध्यमेन, प्रत्यक्षं ( नगद ) वा "मन्त्री, प्राच्यविद्या-प्रसारसमितिः, जे० १२/१३०, धूपचण्डी, जगतगंज, वाराणसी-२" इति पत्रसंकेतेन प्रेषयन्तु ।

## प्राप्ति-स्थानम्

(क) मन्त्री, प्राच्यविद्याप्रसारसमितिः,
जे० १२/१३०, धूपचण्डी,
जगतगंज, वाराणसी
पिन : २२१ ००२

(ख) प्राच्यविद्यासम्पादकः
२, अध्यापक-निवासः,
जगतगंज, वाराणसी
पिन : २२१ ००२

प्रकाशकः—मन्त्री, प्राच्यविद्याप्रसारसमितिः, जे० १२/१३०, धूपचण्डी, जगतगंज, वाराणसी-२२१ ००२. मुद्रक—आनन्द प्रिंटिंग प्रेस, जगतगंज, वाराणसी-२